## चिन्तोः फेनकचयनम्



गतेभ्यः
अशीतिवर्षेभ्यः
श्रीगन्धस्य
सुगन्धं गृहं गृहं
प्रापयन्ती अस्ति
मैसूरुश्रीगन्ध
संस्था ।

अहम् एतत् एव
फेनकमिच्छामि ।

आर्ये ! उत्तमम्
एव चितं बालेन ।
मैसूरुश्रीगन्ध-बालफेनकं
श्रीगन्धवातामयोः तैलेन समृद्धम्
अस्ति । चर्मणः आरोग्यस्य
रक्षणाय नितराम्
उपकारकम् एतत् ।







चतुराः बालाः
सदापि मैसूरुश्रीगन्ध-बालफेनकम्
एव इच्छन्ति ।


















Heroes start early.

Ride, race, take a tumble or even take a fall.
Because it's never too early to be a hero.





Discover
Andhra Pradesh
THE KOHINOOR OF INDIA

# बोरा-पर्वतश्रेणीस्थम् आकर्षकस्थानम्

भारते अतिविशालेन तीरप्रदेशेन, अतिविस्तृतेन रम्यारण्येन, वनेन च युक्तम् अस्ति आन्ध्रप्रदेशराज्यम् ।

एतस्मिन् एव राज्ये अतिदीर्घतमानां गुहानां समूहः अस्ति कर्नूल्जनपदे बेलंप्रदेशे । अतिपुरातनगुहानां समूहः तु अस्ति - बोराप्रदेशे ।

पूर्वपर्वतश्रेण्यां स्थितः बोराग्रामः विजयनगरजनपदे अन्तर्भवति । विशाखपत्तनतः अरकुखातं प्रति गमनमार्गे षट्कि.मी.दूरे अस्ति एषः ।

सुधाशिलाभिः निर्मितासु एतासु अन्यतमायां गुहायां १५० गभीरतायां कुत्रचित् 'गोस्तनी'नदी समुद्भवति । ततः सा पर्वतात् पतित्वा विशालभूप्रदेशं प्रविश्य भीमुनिपत्तनसमीपे समुद्रेन मिलति । यत्र सा उद्भवति तत्र एकं शिवलिङ्गम् अस्ति । लिङ्गस्य उपरि काचित् धेन्वाकृतिः दृश्यते । धेन्वाः ऊधसः नदी उद्भूता इति जनाः भावयन्ति । अतः एव तस्याः नद्याः नाम 'गोस्तनी' इति जातम् ।

यात्रिकाः सुगमतया गुहातलपर्यन्तं गत्वा गुहाछदिषु लम्बमानान् सुधाजल-निर्मितान् आकारान् दृष्ट्वा आनन्दम् अनुभवितुं यथा शक्नुयुः तथा दीपैः गुहाम् अलङ्कृतवती अस्ति आन्ध्रप्रदेशीया प्रवासाभिवृद्धिसंस्था । एते आकाराः द्रवरूपतां गतानां सुधाशिलानाम् अङ्गाराम्लवायोः च मेलनात् निर्मिताः । सहस्राधिकवर्षेभ्यः पूर्वम् एव अत्र जनवसतिः आसीत् इति विश्वस्यते ।

अरकुखातं प्रति गन्तारः प्रायः टैडावन्यशिबिरे विश्राम्यन्ति । यदि ते बोरागुहासमूहप्रदेशम् अपि प्रविशेयुः तर्हि लक्षाधिकवर्षेभ्यः पूर्वतनीं स्थितिम् अक्षिसात्कर्तुं शक्नुयुः ।

**गमनमार्गः** - एषः प्रदेशः विशाखपत्तनतः १० कि.मी.दूरे अरकुतः १५ कि.मी.दूरे च अस्ति । विशाखपत्तनतः यानमार्गेण रेलमार्गेण वा बोराग्रामः प्राप्तुं शक्यः । अरकु-विशाखपत्तनयोः मध्ये यत् रैल्यानं सञ्चरति तत् बोरागुहासमीपे एव तिष्ठति अपि ।

**मा विस्मरन्तु बोरागुहासमूहदर्शनम् !**

# एतस्य अङ्कस्य विशेषाः

सम्पुटः - १९ नवम्बर् - २००२ सञ्चिका - ०८



पुराणकथावली

२४



जनतायाः एव दोषः
(वेतालकथा)

१९

मायासरोवरः - ८

११



विघ्नेश्वरः

४५



## अन्तरङ्गम्




**SUBSCRIPTION**

For USA and Canada
Single copy $2
Annual subscription $20
*Remittances in favour of Chandamama India Ltd.*
to
Subscription Division
CHANDAMAMA INDIA LIMITED
No. 82, Defence Officers Colony,
Ekkatuthangal, Chennai - 600 097
E-mail : subscription@chandamama.org

**उपायनीक्रियताम्**

वायुयानेन भारतेतरदेशान् प्रति
वार्षिकं (१२ सञ्चिकाः) - रू.९००/-
भारते रू. १२०/- (बुक्पोस्ट् द्वारा)
भवदीयं धनं D.D.द्वारा धनादेश(M.O.)द्वारा वा
'Chandamama India Limited'
नाम्ना प्रेषणीयम् ।

विज्ञापिकादानार्थं सम्पर्क्यताम् -
**चेन्नै -**
Ph - 044-2347384, 2347399
e-mail : advertisements@chandamama.org
**देहली -**
*मोना भाटिया*
Ph - 011-6515111/6565513/6565516
**मुम्बयी -**
*शकीलमुल्ला*
Ph - 022-2661599/2661946/2653057



*संस्थापकौ -*

**चक्रपाणिः नागिरेड्डी च**

# नास्त्यन्यः सन्निकृष्टमार्गः, मार्गान्तरमेव वा

कश्चन देवालयः । तत्र नियमः आसीत् यत् यदा अर्चकः पवित्रग्रन्थस्य वाक्यानि पठति तदा सर्वैरपि मौनेन स्थातव्यम् इति । कदाचित् अर्चकः एवं पवित्रग्रन्थं पठन् आसीत् । तदा श्रोतृषु कश्चित् अपरम् अवदत् - ''पूजासमये यः भागः पठनीयः तं परित्यज्य अर्चकः अन्यम् एव भागं पठन् अस्ति इति भाति'' इति ।

तदा तयोः पृष्ठतः स्थितः अवदत् - ''मौनेन स्थातव्यम् इति नियमं भवन्तौ विस्मृतवन्तौ स्तः इति भाति'' इति । चतुर्थः पञ्चमः च 'आम् । आम्'' इति वदन्तौ तृतीयस्य कथनं समर्थितवन्तौ । तदा अर्चकः तान् सर्वान् असमाधानदृष्ट्या सकृत् अपश्यत् । तावता षष्ठः अवदत् - ''अहं तु मौनं पालितवान् अस्मि'' इति ।

जगतः व्यवहारस्य निर्देशिका साङ्केतिकी कथा एषा । 'अन्येषाम् एव दोषः, न तु मम' इत्येतत् चिन्तनं सर्वेषां राष्ट्राणाम् । भारतम् अपि न अपवादः अत्र । एतादृशं चिन्तनं यदा परित्यज्यते तदा एव भयोत्पादकतादीन् हिंसाव्यवहारान् अपसारयितुं शक्नुयाम । यदि अस्माकं देशः दायित्वयुक्ततया गम्भीरतया वा व्यवहरेत् तर्हि प्रायः अन्यदेशाः अस्मान् तथा पीडयितुं न अर्हन्ति, यथा इदानीं पीडयन्तः सन्ति ।

एतस्याः स्थितेः समीकरणाय किं वा करणीयम् ? परिहारमार्गः वस्तुतः अस्पष्टः एव इति वक्तुं शक्यते । तथापि एतावत् तु कर्तुं शक्यते -

सर्वेऽपि आत्मवञ्चनाप्रवृत्तिम् आदौ त्यजेयुः । बलवान् अनुशासनता-मलिनतावायुः वाति चेदपि अस्माभिः अस्थिरैः न भवितव्यम् । स्वप्रज्ञाम् अवलम्ब्य अस्माभिः दृढतया स्थातव्यम् । एतद्विषये नास्ति अन्यः सन्निकृष्टमार्गः, मार्गान्तरम् एव वा ।

वयं सर्वे आत्मनि स्थितान् दुर्विचारान् अपसारयेम । यथा दीपावली स्वप्रकाशेन अन्धकारम् अपसारयति तथैव अस्मासु स्थितः ज्ञानदीपः अज्ञानान्धकारम् अपसारयेत् ।

---

*सम्पादकः* - **विश्वम्**





भारतनायकस्पर्धायां भागम् ऊढ्वा प्राप्नुवन्तु अपूर्वाणि पारितोषिकाणि

# भारतीयाः नायकाः-१४

अत्र कांश्चन समाजपरिष्कारकान् आधारीकृत्य प्रश्नाः सन्ति । उत्तरं दातुं प्रयतन्ताम् ।

**समुचितोत्तरदातारः त्रयः पुरस्क्रियन्ते द्विचक्रिकादानेन**

१ अहं १८३० तमे वर्षे सहगमनपद्धतेः निर्मूलनाय इंग्लेण्ड्देशम् अभ्यर्थितवान् । अहं कल्कत्तानगरे प्रथमां भारतीयविज्ञानसंस्थां संस्थापितवान् अपि । अहं कः ?

........................................................................

२ 'एकः देवः, एकः धर्मः, एका जातिः च स्यात् मानवानाम्' इत्येतं विचारं प्रचारयन् अहं केरलेषु सर्वजनप्रवेशार्हाणि मन्दिराणि आरब्धवान् । मम नाम किम् ?

........................................................................

३ अहं १८८२ तमे वर्षे गोरक्षासमितिम् आरब्धवान् । विग्रहाराधनं पशुबलिसम्प्रदायं च विरुध्य मया कार्यं कृतम् । मम नाम किम् ?

........................................................................

४ अहम् अनक्षरतानिवारणाय निर्धनजनोद्धरणाय महिलासमुद्धाराय च कार्यं कृतवान् । भारतस्य संविधानस्य शिल्पी इति मम ख्यातिः अस्ति । मम नाम किम् ?

........................................................................

५ मया आनन्दवने कुष्ठरोगग्रस्तानाम् अन्यविध-विकलाङ्गानां च निमित्तं ग्रामीणचिकित्सालयः आरब्धः । अहं १९९९ तमे वर्षे गान्धि-शान्तिपुरस्कारं प्राप्तवान् । मम नाम किम् ?

........................................................................



प्रतिप्रश्नम् उत्तरं लिखन्तु । एतेषु पञ्चसु नायकेषु प्रियतमः कः किमर्थं च इति दशभिः शब्दैः लिखन्तु । मम प्रियतमः नायकः ........................................

........................................................................

........................................................................

........................................................................

भागग्रहीतुः नाम ........................................

वयः ........................ कक्ष्या ........................

सङ्केतः ........................................

........................................................................

........................................................................

पिन् ........................ दूरवाणी ........................

एतं पुटं पृथक्कृत्य प्रेषयन्तु अधोनिर्दिष्टसङ्केताय -

**भारतीयनायकस्पर्धा-१४**
चन्दमामा इण्डिया लिमिटेड्,
८२, डिफेन्स् आफीसर्स् कालोनी
एक्काटुतङ्गल्, **चेन्नै - ६०० ०९७**
उत्तरप्रेषणाय अन्तिमदिनाङ्कः - **५, डिसेम्बर्, २००२**

*नियमाः* -

१. अधिकाष्ट-ऊनचतुर्दशवर्षीयाः एतस्यां स्पर्धायां भागं ग्रहीतुम् अर्हन्ति ।
२. विविधभाषाभिः प्रेषितानि उत्तराणि परिशील्य त्रयः श्रेष्ठाः चीयन्ते । यदि योग्योत्तरदातारः बहवः तर्हि प्रियतमनायकविषये लिखितं वाक्यम् अवलम्ब्य चयनं क्रियते ।
३. निर्णायकानां निर्णयः एव अन्तिमः ।
४. एतं विषयम् अधिकृत्य पत्रव्यवहारः कोऽपि न करणीयः ।
५. विजेतारः पत्रद्वारा सूच्यन्ते ।




## पादयात्रा



किं कदाचित् वा भवन्तः पादयात्रां कृतवन्तः ? यदि पादयात्रायाम् इच्छा तर्हि पण्डरापुरस्य विठ्ठलस्य भक्तानां महाराष्ट्रियाणां वारकरीजनानां गणेन सम्मिलिताः भवन्तु । ते प्रतिवर्षं पण्डरापुरयात्रां कुर्वन्ति । ७०० वर्षेभ्यः एषा यात्रा प्रचलति । इन्द्रायणीनद्याः तीरे स्थितात् आलिन्दीप्रदेशात् यात्रायाः आरम्भः भवति । चन्द्रभागानद्याः तीरे स्थिते पण्डरापुरे च समाप्तिम् एष्यति । एतत् दूरम् अतिक्रान्तुं प्रायः मासात्मकः कालः आवश्यकः । एतस्याः यात्रायाः 'महायात्रा' इति नाम । एषा यात्रा आषाढमासे आरब्धा भविष्यति ।

यात्रायां जनाः गणरूपेण गच्छन्ति । एषः गणः 'दिण्डी' इति उच्यते । ते मार्गे भजनानि अभङ्गानि च गायन्तः गच्छन्ति । कदाचित् महिलाः एतस्यां भागं गृह्णत्यः शिरसि तुलसीयुतं चतुरस्राकारकं पात्रं वहन्त्यः गच्छन्ति । एवं यात्रां कुर्वतां वस्तूनि भारवाहकयानेन उह्यन्ते । प्रयाणमार्गे स्थिताः ग्रामाः नगराणि च एतादृशयात्राजनानाम् आहारादिव्यवस्थां कुर्वन्ति ।

## रात्रौ मीनग्रहणम्



निकोबारद्वीपस्य जनाः मीनग्रहणाय विविधान् क्रमान् अवलम्बन्ते । तेषु रात्रौ मीनग्रहणक्रमः अपि अन्यतमः । यदा समुद्रस्य ओघः न्यूनः भवति तदा तरङ्गाः तीरात् अपगताः भवन्ति । तदा शुक्तियुक्तः तीरप्रदेशः दृष्टिगोचरः भवति । तस्मिन् लघुमीनाः तत्र तत्र संलग्नाः दृश्यन्ते । तदा निकोबारीयाः जनाः नारिकेलशलाकाभिः निर्मिताः सम्मार्जनीः गृहीत्वा मीनग्रहणाय ग्रामात् निर्गच्छन्ति । एतस्मिन् रात्रीयमीनग्रहणकार्यक्रमे पुरुषाः, महिलाः, बालाः चापि भागं वहन्ति ।

# अज्ञातप्रायाणि भारतीयानि स्थलानि

# पिचावरम्



अग्रिमे काले यदि भवन्तः तमिलुनाडुराज्यं प्रति गच्छेयुः तर्हि द्रष्टव्यस्थलानाम् आवल्यां पिचावरम् अपि योजयन्तु । एतत् सुन्दरदृश्योपेतं समृद्धवैविध्यमयप्रवासकारणोपेतं च अस्ति ।

पिचावरम्-अरण्ये नदीतीरीयवृक्षसम्पदः समृद्धिः दृश्यते । एतादृशी समृद्धिः अन्यत्र दुर्लभा । नदीतीरे प्रवृद्धानां वृक्षाणां मूलानि सदा जले भवन्ति । अत्रत्या या नदीतीरीय-वनराजिः अस्ति सा 'स्वास्थ्यलाभाय विशेषोपकारिका' इति जगति एव ख्यातिं गता अस्ति ।

अत्रत्यम् अरण्यं २८०० एकरात्मकम् । अत्र पराङ्मुखसमुद्रजलप्रवाहेण बहवः द्वीपाः निर्मिताः सन्ति । अरण्यसमुद्रयोः मध्ये दीर्घः सैकतप्रदेशः अस्ति, यश्च अलौकिकं सौन्दर्यं वहति । पराङ्मुखजलसङ्ग्रहस्थानानि वेल्लार्-कोलेरून्प्रभृतिभिः जलक्रमैः परस्परं संयुक्तानि जातानि सन्ति । तत्कारणतः जलक्रीडार्थं, नौकासञ्चारार्थम्, उडुपचालनार्थं च उत्तमाः अवकाशाः सन्ति अत्र ।

विशालः जलसङ्ग्रहः हरिद्वर्णीयैः वृक्षैः आवृतः अस्ति यत् तस्मात् निसर्गप्रियाणां स्वर्गायते एषः परिसरः । अविकेनिया-रिजोफोराप्रभृतयः विरलप्राप्याः सस्यप्रभेदाः अपि दृष्टिगोचराः भवन्ति अत्र ।

पिचावरं प्रति गमनसमये चित्रग्राहकयन्त्रस्य दूरवीक्षणयन्त्रस्य च नयनं न कदापि विस्मर्तव्यम् । पक्षिवीक्षणाय अपि एतत् सुयोग्यं स्थानम् । विविधजातीयाः बकाः, समुद्र-पक्षिणः, दीर्घकण्ठपक्षिणः, जलकुक्कुटाः इत्यादयः बहुविधपक्षिणः वसन्ति अत्र ।

तमिळुनाडुराज्यीया प्रवासोद्यमसंस्था अत्र नौकासञ्चाराय व्यवस्थां करोति ।

## गमनमार्गविवरणम् -

दैविकनृत्यपटोः नटराजस्य क्षेत्रात् चिदम्बरात् १६ कि.मी.दूरे अस्ति पिचावरम् । चिदम्बरक्षेत्रस्य चेन्नै-मधुरै-तिरुच्चिप्रभृतिक्षेत्राणां च उत्तमः वाहनसम्पर्कः अस्ति । प्रमुखनगरेभ्यः एतत् नगरं प्रति गमनाय उत्तमः यानमार्गः अपि अस्ति । समीपतरं विमानस्थानकं तिरुच्चि । तमिळुनाडुप्रवासाभिवृद्धिसंस्था प्रवासिजनानां कृते वासकुटीराणाम् आहारस्य च व्यवस्थाम् उपकल्पयति । लोकयानं, भाटककार्यानं, त्रिचक्रिका इत्यादीनां सेवा अपि उपलभ्यते ।



# मायासरोवरः

## ८

*[जयशीलः सिद्धसाधकः च कथमपि जलप्रवाहात् आत्मानं रक्षितवन्तौ । वृक्षे लम्बमानः कश्चन वामनः ताभ्यां रक्षितः । तावता मेषारूढा वामनराज्ञी तत्र आगता । यावत् सा स्वशत्रूणां विषये कथयन्ती आसीत् तावता पर्वतशिखरस्थः कश्चन भयङ्करः जन्तुः तेषाम् उपरि महाशिलाखण्डम् अक्षिपत् । तदनन्तरम् .......]*

जयशीलः सिद्धसाधकः च महता आश्चर्येण तं भयङ्करजन्तुं दृष्टवन्तौ । तस्य पार्श्वे स्थितः दृढकायः पुरुषः अपि ताभ्यां लक्षितः । 'एषः कुत्रापि मया दृष्टः इतः पूर्वम्' इत्येषा भावना उत्पन्ना जयशीलस्य मनसि ।

तावता तेन महाजन्तुना क्षिप्तः महाशिलाखण्डः मेषारोहिसमूहस्य अनतिदूरे अपतत् ।

मेषम् आरुह्य आगताः एतत् दृष्ट्वा कम्पमानाः जाताः ।

वामनराज्ञी जयशीलसिद्धसाधकौ उक्तवती – "महायोद्धारौ ! यः बलवान् पुरुषः एतं महाजन्तुं स्वाधीनीकृतवान् अस्ति सः पञ्चदशभ्यः दिनेभ्यः पूर्वम् अत्र आगतः । येषां पक्षं समर्थ्य एषः अस्मान् पीडयति तेषां जातिः अस्मज्जातितः अपि अवरा । ते दुष्टाः यदाकदाचिदपि आक्रमणं कर्तुम् अर्हन्ति



खण्डः क्षिप्तः चेत् ततः रक्षणं न कष्टकरम् इति'' इति ।

अनन्तरं सः वामनराज्ञीम् अवदत् - ''भवन्तः मृगयार्थं यस्य बाणस्य उपयोगं कुर्वन्ति तादृशं कञ्चित् बाणम् आनेतुं व्यवस्थां करोतु'' इति ।

जयशीलः यदा एवम् उक्तवान् तदा तत् श्रुत्वा वामनसेनापतिः भीतः । सः भीत्या एव राज्ञीं पश्यन् अवदत् - ''महाराज्ञि ! सम्प्रदायानुगुणं वयं बाणं स्रष्टुं न अर्हाः । तस्य उपयोगः अपि न करणीयः अस्माभिः । एतद् अत्र स्मारयितुम् इच्छामि यत् अरण्ये प्राप्ताः धनुर्बाणादयः सुरक्षिततया स्थापिताः सन्ति मया'' इति ।

एतस्य उत्तररूपेण वामनराज्ञी किमपि वक्तुम् उद्युक्ता । तावता जयशीलः अवदत् - ''राज्ञि ! तेषां बाणानाम् आनयनव्यवस्था कारिता चेत् एतस्य नरवानरस्य पीडाम् अहम् अचिरात् एव निवारयितुं शक्नुयाम् । अनन्तरकाले यदा युद्धं भवेत् तदा मदर्थम् अपेक्षितानां बाणानां निर्माणम् अहं स्वयमेव कुर्याम्'' इति ।

राज्ञी आदेशपूर्णदृष्ट्या सेनापतिं दृष्टवती । सेनापतिः झटिति बाणानाम् आनयनाय स्वयं प्रस्थितः ।

एतावता नरवानरः आत्मना उन्नीतं महाशिलाखण्डम् इतस्ततः चालयन् तैः दृष्टः । तस्य कटौ स्थितं निगडं गृहीतवान् जनः उच्चैः आदिशन् खड्गस्य अग्रेण नरवानरस्य पृष्ठे तोदनं कृतवान् ।

एतं स्वरं श्रुत्वा जयशीलः आनन्दं प्रकटयन्

एतस्य महाजन्तोः, बलशालिपुरुषस्य च साहाय्येन'' इति ।

जयशीलः सिद्धसाधकः च राज्ञ्याः दयार्हां दशां दृष्ट्वा नितरां खिन्नौ । तौ जानीतः स्म यत् एते वामनकुलीयाः साहसिनः सन्तोऽपि भयङ्करजन्तोः कारणतः नितरां भीताः सन्ति इति ।

सः पुरुषः पुनरपि स्वखड्गेन नरवानरं पृष्ठे अपीडयत्, किमपि आदिशत् च । अतः सः महाजन्तुः पुनरपि अन्यं महाशिलाखण्डम् उन्नीय क्षेप्तुम् उद्युक्तः जातः ।

तत् दृष्ट्वा जयशीलः अवदत् - ''सिद्धसाधक ! सः पुनरपि महाशिलाखण्डं क्षेप्तुम् उद्युक्तः दृश्यते । परन्तु तस्य प्रवर्तकः सः बलशाली पुरुषः मूर्खः इव भाति । यतः सः एतावत् अपि न जानाति यत् दिने शिला-

अवदत् - ''सिद्धसाधक ! सः बलवान् पुरुषः कः इति इदानीं मया स्मृतम् । सः अमरावती-नगरीयः । एतस्य कारणतः एव मया अमरावती परित्यक्तव्या अभवत् । पूर्वम् एषः अस्माकं राज्ञः रुद्रदेवस्य अश्वदलस्य प्रमुखः आसीत् । एतस्य नाम अस्ति कृपाणजित् इति'' इति ।



एतदभ्यन्तरे वामनसेनापतिः धनुः बाणान् च स्वीकृत्य तत्र उपस्थितः । सः तान् जयशीलस्य पादयोः पुरतः स्थापितवान् विनयेन । जयशीलः बाणान् उन्नीय परीक्षितवान् । तत्र षड् बाणाः आसन् । ते उत्तमाः आसन्, तीक्ष्णाः आसन्, उपयोगयोग्याः चापि आसन् ।

सिद्धसाधकः अपि तान् बाणान् उन्नीय परीक्षितवान् । बाणानाम् उपयोगयोग्यता तस्यापि सन्तृप्तये जाता । ततः सः महतीं सन्तृप्तिं प्रकटयन् जयशीलम् अपृच्छत् - ''जयशील ! किं भवान् एतैः बाणैः तं कृपाणजितं नरवानरं च मारयितुम् इच्छति ?'' इति ।

तदा जयशीलः मन्दहासपूर्वकम् उक्तवान् - ''भोः, वयं ततः सुदूरे स्मः । इतः बाणान् प्रयुज्य किं तौ मारयितुं शक्यौ ? एते बाणाः तु सामान्याः एव, न ब्रह्मास्त्रनागास्त्रादयः'' इति ।

वामनराज्ञी अग्रिमपदविषये ज्ञातुम् इच्छन्ती सेनापतिं दृष्टवती । मेषम् आरुह्य उपविष्टः सेनापतिः स्वस्य शूलम् उन्नीय उत्साहेन अवदत् - ''महोदय ! भवान् बाणप्रयोगं करोतु । यदा बाणाः लग्नाः भवन्ति तदा तौ दुष्टौ भीतौ भवतः । तदा वयम् आक्रमणं करिष्यामः । तान् अनुसृत्य पर्वतमूलपर्यन्तम् अपि गमिष्यामः । यदि शक्यते तर्हि तेषां वसतिम् उध्वस्तां कृत्वा अग्निसात्करिष्यामः अपि'' इति ।

सिद्धसाधकः अपि शूलम् उन्नीय अवदत् - ''जयशील ! उत्तमः अवसरः एषः । तौ लक्ष्यीकृत्य बाणप्रयोगं करोतु । यदि निगडः अपगतः स्यात् तर्हि सः नरवानरः एव क्रोधवशात् तं बलशालिपुरुषं गृह्णीयात् अपि'' इति ।

जयशीलः धनुषि बाणं संयोज्य लक्ष्यं निश्चित्य बाणं प्रयुक्तवान् । वेगेन गतः बाणः वानरस्य कटौ लग्नः । अपरक्षणे एव नर-वानरः उच्चैः आक्रोशनम् अकरोत्, क्रोध-वशात् पार्श्वस्थम् एकं वामनम् उन्नीय पर्वतमूले



ततः सिद्धसाधकः वामनराज्ञीम् अवदत् - ''आर्ये ! भवती अत्रैव तिष्ठतु । आवां भवत्याः सैनिकैः सह गच्छावः । भवत्याः शत्रुसैनिकानां सर्वनाशं करिष्यावः लीलया'' इति ।

तदनन्तरं जयशीलः सिद्धसाधकः च पर्वतं वेगेन आरोढुम् उद्युक्तौ जातौ । तौ सेनापतिम् उक्तवन्तौ - ''सेनापतिवर्य ! स्वसैनिकानां गमनं किञ्चित् स्थगयतु । सः नरवानरः पुनरपि पाषाणक्षेपणे उद्युक्तः अस्ति इति भाति'' इति ।

तदा सेनापतिः अवदत् - ''मान्यौ ! भवन्तौ तस्मात् नरवानरात्, तं निगृह्णतः बलशालिपुरुषात् च अस्मान् रक्षताम् । तौ अस्माकं हानिं यथा कुर्यातां तथा कुरुताम् । वयं तं गडेकोण्डं, तदनुचरान् च शूलैः छित्वा मारयिष्यामः'' इति ।

एतावता नरवानरः अपरं शिलाखण्डम् उन्नीय क्षेपणे उद्युक्तः जातः । तदा सिद्धसाधकः अवदत् - ''एषः नरवानरः पाषाणक्षेपणात् ऋते अन्यत्किमपि न जानाति इति भाति । अहं मम शूलं क्षिप्त्वा तं यमलोकं प्रेषयिष्यामि'' इति ।

ततः सः शूलम् उन्नीय क्षेपणाय उद्युक्तः । जयशीलः अवगतवान् यत् एवं करणात् सिद्धसाधकः अपायं स्वयं स्वागतीकरिष्यति इति ।

अतः सः तं निवार्य नरवानरम् उद्दिश्य स्वयं बाणप्रयोगं कृतवान् । बाणः लक्ष्यच्युतः सन् निगडे संलग्नः । स च निगडः कृपाणजितः हस्ते आसीत् । कृपाणजित् शिरः क्षिप्तवान् च ।

सः वामनः हाहाकारं कुर्वन् आकाशमार्गेण गच्छन् भूमिम् अस्पृशत् । सेनापतिः स्वस्य अनुचरान् जागरितवान् । अनन्तरक्षणे एव मेषम् आरूढवन्तः ते उच्चैः जयघोषं कुर्वन्तः शूलम् उन्नीय वेगेन पर्वतारोहणे उद्युक्ताः अभवन् ।

वामनसेनापतिं तत्सहचरान् च पर्वतारोहणे उद्युक्तान् दृष्ट्वा कृपाणजित् स्वपक्षीयान् युद्धाय प्रोत्साहितवान् । जयशीलः तस्य एतं प्रयासं दृष्ट्वा अवदत् - ''सिद्धसाधक ! इदानीम् आवाभ्यां कार्ये प्रवृत्ताभ्यां भवितव्यम् । भवता कृपाणजित् दृष्टः खलु ? सः अरण्यवासिनां वेषम् एव धृतवान् अस्ति । तथापि मया सः अभिज्ञातः । सः माम् अभिज्ञातवान् स्यात् एतावता'' इति ।

उन्नीय शत्रुं दृष्टवान्, जयशीलम् अभिज्ञातवान् च ।

अनन्तरं सः सेनापतिं गडेकोण्डम् अवदत् – "आक्रमणाय एषः न योग्यः समयः । झटिति एव इतः अस्माकं निर्गमनं श्रेयसे" इति । एतावत् उक्त्वा सः नरवानरं पर्वतमूलं नेतुम् उद्युक्तः जातः ।

एतावता सेनापतिः गडेकोण्डः जयशीलं सिद्धसाधकं च पश्यन् अवदत् – "अयि महानुभाव ! भवतः आज्ञां पालयिष्यामः वयम् । तथापि कश्चन प्रश्नः । भवान् तु महावीरः शूरः च । भवान् नरवानरः च यदि सम्भूय आक्रमणं कुरुतः तर्हि सः धनुर्धारी शूलधारी च मारयितुं शक्यौ खलु ? तौ निवारितौ चेत् अवशिष्टान् सैनिकान् वयं शूलैः विदार्य मारयिष्यामः" इति ।

किन्तु कृपाणजित् तस्य वचनस्य विषये अवधानं न दत्तवान् एव । सः नरवानरेण सह पर्वतमूलं प्रति गमनम् अनुवर्तितवान् । किञ्चिद्दूरं गत्वा अनुसरन्तं गडेकोण्डम् उक्तवान् सः – "शत्रूणां जयः न तथा सुकरः । शत्रूणां संहाराय अन्यः एव उपायः चिन्तनीयः । वसतिं गत्वा तद्विषये विस्तरेण वदिष्यामि । इदानीं युद्धं मास्तु । मम आज्ञां पालयतु इदानीम्" इति ।

सेनापतिः गडेकोण्डः स्वस्य अनुचरान् आज्ञापितवान् – "भवन्तः सर्वे वसतौ एकत्रिताः भवन्तु" इति ।

सेनापतेः आज्ञाम् अनुसरन्तः ते सर्वे पर्वतस्य अवरोहणं कर्तुम् उद्युक्ताः जाताः । पलायनं कुर्वतः शत्रुसैनिकान् दृष्ट्वा जयशीलः



सेनापतिम् उक्तवान् – "सेनाध्यक्षवर्य ! एषः आक्रमणार्थं सुसमयः । तान् अनुसरन्तु भवन्तः । तान् उद्दिश्य शूलं क्षिपन्तु । पर्वतशिखरात् पाषाणपातनेन यावन्तः शत्रु-सैनिकाः मारयितुं शक्याः तावन्तः मार्यन्ताम्" इति ।

तदा वामनसेनापतिः स्वस्य अनुचरान् उद्दिश्य अवदत् – "अयि भोः सैनिकाः, व्याघ्राः इव, सिंहाः इव च आक्रमणं कुर्वन्तु । तान् सैनिकान् शूलेन संहरन्तु । सः भयङ्कर-जन्तुः पलायमानः अस्ति । तस्मात् भयं सर्वथा नास्ति अस्माकम्" इति ।

सिद्धसाधकः अपि उत्साहं प्राप्य शूलम् उन्नीय – "जय महाकालि !" इति उच्चैः वदन् जयशीलम् अवदत् – "भोः, किं दर्शन-मात्रेण ? आवाम् अपि आक्रमणे भागिनौ



भवाव । पर्वतमूले या वसतिः दृश्यते तत्रैव वसन्ति शत्रवः । हठात् आक्रमणं कृत्वा वयं कृपाणजितं गडेकोण्डपक्षीयान् सैनिकान् च संहराम'' इति ।

तस्य वचनं श्रुत्वा जयशीलः हसन् उक्तवान् – ''मित्र ! तेषां मारणम् अस्माकम् उद्देशः न । यतः न ते अस्माकं शत्रवः । यदि शक्यते तर्हि उभयोः पक्षयोः मैत्रीं सम्पादयितुं प्रयासः करणीयः अस्माभिः'' इति ।

''कृपाणजित् अस्माकं प्राचीनशत्रुः । किं तद्विषये अपि अस्माभिः किमपि न करणीयम् ? किं सः नरवानरः अपि न संहरणीयः ? तस्य साहाय्यात् एव खलु कृपाणजित् अत्र राजा इव जातः अस्ति ? तथापि तद्विषये किमपि किं न करणीयम् अस्माभिः ?'' इति उद्वेगेन अपृच्छत् सिद्धसाधकः ।

यावत् जयशीलः किमपि उत्तरं दातुम् उद्युक्तः तावता वामनराज्ञ्याः सेनाध्यक्षः तत्र आगत्य अवदत् – ''महोदय ! शत्रवः पलायिताः । शत्रुसैनिकान् कांश्चन वयं मारितवन्तः अपि । अग्रे किं करणीयम् इति आज्ञापयतु तावत्'' इति ।

तदा जयशीलः अवदत् – ''इदानीं भवन्तः राज्ञीसमीपं गच्छन्तु । आवाम् अचिरात् एव तत्र उपस्थिताः भविष्यावः'' इति ।

''भवन्तः सर्वे राज्ञीसमीपं गच्छन्तु'' इति सैनिकान् आज्ञापितवान् सेनाध्यक्षः ।

एकः सैनिकः सिद्धसाधक-जयशीलयोः मार्गदर्शनाय तत्रैव अवशिष्टः । अन्ये सर्वे सैनिकाः महता उत्साहेन नृत्यन्तः उच्चैः जयकारं कुर्वन्तः च पर्वतात् अवतरणम् आरब्धवन्तः ।

सिद्धसाधकः किञ्चित्कालं गच्छतः सैनिकान् दृष्टवान् । ततः सः जयशीलम् अवदत् – ''मित्र ! मम तु भाति यत् एतेषां विवादे अस्माभिः न प्रवेष्टव्यम् इति । अस्माकं लक्ष्यं किम् ? किम् अस्माभिः करणीयम् अग्रे ?'' इति ।

''सिद्धसाधक ! शान्तः भवतु भवान् । मकरमुखस्य मकरकेतोः कारणतः एतत् जातम् । कनकाक्षमहाराजस्य पुत्रयोः अन्वेषणाय, तयोः अपहर्तुः अन्वेषणाय च वयम् आदौ प्रवृत्ताः । ततः अत्र आगताः वयम् अरण्यवासिनां विवादे पतिताः । कथम् एवं जातम् इति अहम् अपि आश्चर्यम्

अनुभवामि । इतः निर्गमनात् पूर्वम् आवाभ्यां सः कृपाणजित् संहरणीयः एव'' इति अवदत् जयशीलः ।

''यदि महाकाल्याः कृपा स्यात् तर्हि वयं प्रायः तं नरवानरम् अपि संहर्तुं शक्नुयाम । एतादृशस्य विचित्रमृगस्य चर्मणः उपरि पद्मासने उपविश्य ध्यानं कृतं चेत् अग्रिमे जन्मनि महायोगित्वेन जननं भविष्यति इति श्रूयते । इदानीं तु महती बुभुक्षा बाधते माम् । अतः वामनराज्ञीं द्रष्टुं गच्छाव तावत्'' इति अवदत् सिद्धसाधकः ।

जयशीलः सिद्धसाधकः च पर्वतस्य उपरि यदा एवं वार्तालापं कुर्वन्तौ आस्तां तदा एव वृक्षस्य अधः कृपाणजित्-गडेकोण्डयोः कलहः प्रवर्तमानः आसीत् । 'भवतः कारणतः एव एवं जातम्' इति परस्परं वदन्तौ तौ परस्परनिन्दने मग्नौ आस्ताम् ।

सेनापतिः गडेकोण्डः कृपाणजितं निन्दन् अवदत् - ''भवान् दर्शनेन पुष्टकायः, दृढशरीरः इव भाति । किन्तु भवति साहसप्रवृत्तिः अणुमात्रेण अपि नास्ति । भवान् भीरुः अस्ति । शत्रून् दृष्ट्वा आदौ भवान् एव पलायितवान् । यस्य नरवानरस्य प्रशंसा भवता बहुधा क्रियते सः स्वामिनं भवन्तम् एव ग्रहीतुं प्रयतते स्म'' इति ।

कृपाणजित् एतेन वचनेन नितरां क्रुद्धः सन् - ''अये मूर्ख ! मया शत्रुभ्यः भीतेन न जातम् । समयः अनुकूलकरः न आसीत् इत्यतः युद्धं परित्यक्तं तात्कालिकतया । मां लक्ष्यीकृत्य यः बाणप्रयोगं कृतवान् सः जयशीलः श्वः सूर्योदयात् पूर्वं परलोकं गतः भविष्यति । एषा मम प्रतिज्ञा । नरवानरविषये खलु उक्तं भवता ? वानरः यथा स्वामिनः आज्ञायाः अनुगुणं व्यवहरति तथैव व्यवहरति एषः अपि मम आज्ञायाः अनुगुणम् । एतत् इदानीं प्रत्यक्षतः दर्शयिष्यामि तावत्'' इति उक्त्वा गडेकोण्डं दर्शयन् नरवानरं किमपि अवदत् ।

अनन्तरक्षणे नरवानरः गडेकोण्डं गृहीत्वा उन्नीय हर्षध्वनिम् अकरोत् । स्वामिनः प्राणाः अपायग्रस्ताः सन्ति इति ज्ञात्वा गडेकोण्डस्य अनुयायिनः शूलम् उन्नीय कृपाणजित्-नरवानरयोः दिशि आगतवन्तः ।

- *(अनुवर्तते)*



# सन्तोषरहस्यम्

शिवः कृष्णगिरेः भूस्वामिनः कार्यालये लिपिकारत्वेन कार्यं करोति स्म । सः सर्वदा हसन्मुखः भवति स्म। एतत् दृष्ट्वा तस्य सहोद्योगिनः आश्चर्यम् अनुभवन्ति स्म - अल्पः आयः अस्ति चेदपि एषः कथं सदा सन्तोषेण तिष्ठति, परिवारं च कथं पोषयति इति । एतादृशम् आश्चर्यं प्राप्तवत्सु माधवः अपि अन्यतमः । माधवस्य आयः अधिकः आसीत् । तथापि सः कुटुम्बपोषणे प्रतिमासं कष्टम् अनुभवति स्म । अतः सः एकस्मिन् दिने शिवं दृष्ट्वा सन्तोषस्य कारणं पृष्टवान् ।

तदा शिवः हसन् अवदत् - ''यत् वेतनं प्राप्यते तस्य चत्वारः विभागाः क्रियन्ते मया । प्रथमः भागः ऋणप्रत्यर्पणाय, द्वितीयः भागः स्वनिमित्तं व्ययाय, तृतीयः भागः पुण्यसम्पादनाय, चतुर्थः भागः ऋणरूपेण दानाय च व्ययीक्रियते मया'' इति ।

''अल्पवेतनः भवान् कथम् अन्यस्मै ऋणं दातुं शक्नोति ?'' इति आश्चर्येण पृष्टवान् माधवः ।

तदा शिवः हसन् उक्तवान् - ''ऋणप्रत्यर्पणं नाम मातापित्रोः निमित्तं धनस्य व्ययीकरणम् । स्वनिमित्तं व्ययः नाम पत्नीपुत्रादीनां पोषणाय क्रियमाणः व्ययः । पुण्यकार्याय व्ययः नाम अनाथाः बान्धवाः ये मम गृहे आश्रयं प्राप्तवन्तः तेषां निमित्तं क्रियमाणः व्ययः । ऋणरूपेण दानं नाम पुत्रादीनाम् अध्ययनाय धनस्य व्ययीकरणम् । ते एव खलु अग्रे अस्मान् पोषयिष्यन्ति ? अतः तेषां निमित्तं व्ययः ऋणरूपेण दानम् इव'' इति ।

अल्पे आये सत्यपि आवश्यकतानुगुणं धनं विभज्य तत्तन्निमित्तं व्ययीकरोति यत् तदेव शिवस्य सन्तोषस्य रहस्यम् इति अवगतवान् माधवः ।



# वेताल-कथा

## जनताया: एव दोषः

दृढव्रती त्रिविक्रमः पुनरपि वृक्षस्य समीपं गत्वा शाखायां लम्बमानं शवं स्कन्धे आरोप्य यथापूर्वं मौनेन श्मशानं प्रति प्रस्थितवान् । तदा शवान्तर्गतः वेतालः अवदत् - ''अये राजन् ! मया बहुधा बोधितं चेदपि भवान् स्वप्रयत्नं न परित्यजति । भवान् साहसी अस्ति, भवतः सहना अपारा, लक्ष्यसाधनेच्छा च प्रबला इत्यादिकं तु युक्तम् । किन्तु अस्थाने प्रतिभाव्ययः भवतः ।। राज्ञः विक्रमसिंहस्य इव भवतः प्रयत्नः अपि निष्फलः । सः राजा सिंहासनं कस्मैचित् दातुम् इच्छन् अन्ते विफलतां प्राप्तवान् । भवतः मार्गायासपरिहाराय तस्य कथां श्रावयामि । तां श्रद्धया शृणोतु तावत्'' इति ।



अनन्तरं वेतालेन कथा आरब्धा –

विक्रमसिंहः विशालदेशस्य राजा । सः निस्सन्तानः । प्रजाः एव पुत्रवत् पश्यति स्म सः । प्रजाः प्रीत्या पश्यन् सः आत्मनः निस्सन्तानतां विस्मृतवान् आसीत् । किन्तु प्रजानां चिन्ता आसीत् – महाराजस्य दिवङ्गतेः अनन्तरं को वा सिंहासनस्य उत्तराधिकारी भवेत् इति ।

अतः केचन प्रमुखनागरिकाः महाराजं दृष्ट्वा उक्तवन्तः – ''महाप्रभो ! देशस्य हितदृष्ट्या दत्तकरूपेण योग्यस्य बालकस्य स्वीकारः वरम् । इदानीम् एव तादृशं बालकं चित्वा योग्यं शिक्षणं दातव्यम् । तेन अधिकारस्वीकारकाले सः सामर्थ्यवान् भवितुम् अर्हति'' इति ।

'एतत् वचनं युक्तम् एव' इति विचिन्त्य सः एतं विचारं राज्ञीम् उक्तवान् । राज्ञी अपि एतत् अङ्गीकृतवती । ततः तौ निर्णीतवन्तौ – 'बालकं स्वीकृत्य शिक्षणदानं महान्तं समयम् अपेक्षते । अतः योग्यस्य युवकस्य स्वीकारः एव शीघ्रफलदायकः' इति ।

अनन्तरं देशे एतद्विषये घोषणा कारिता । बहवः युवकाः एतदर्थम् अग्रे आगताः । महाराजः स्वयं तेषां परीक्षां कृतवान् । अन्ते कुशलः सुशीलः इत्येतौ युवकौ चितौ । तयोः सामर्थ्यं सर्वेष्वपि विषयेषु समानम् आसीत् ।

एतयोः कतरः चेतव्यः इति निर्णेतुं न शक्तवान् राजा । अतः सः तौ उक्तवान् – ''भवन्तौ सामर्थ्येन समानौ । किन्तु भवतोः अन्यतरः एकः एव राजा भवितुम् अर्हति । राजत्वप्राप्तिः न सामान्यः विषयः । राजा भगवत्स्वरूपः भवति । भवन्तौ बह्वीषु विद्यासु पारं गतौ । विद्यानैपुण्येन सह देवकृपा अपि आवश्यकी । सा दैवकृपा प्राप्तव्या भवद्भ्याम् । वर्षाभ्यन्तरे भवतोः यः अधिकतया दैवकृपां प्राप्स्यति तस्मै राज्यं समर्पयिष्यते । अतः भवन्तौ तदर्थं प्रयासं कर्तुम् अर्हतः'' इति ।

सुशीलः कुशलः च समीपस्थम् अरण्यं गतवन्तौ । तत्र तौ घोरे तपसि लीनौ जातौ । वर्षसमाप्तितः पूर्वम् एव भगवान् तयोः पुरतः प्रत्यक्षः जातः ।

''अपेक्षितं वरं प्रार्थयतु'' इति आदौ सुशीलम् अवदत् सः ।

''मम देशे प्रजाः सुखेन यथा भवेयुः तथा वरेण अनुगृह्णातु'' इति प्रार्थितवान् सुशीलः ।

तदा भगवान् प्रसन्नतां प्रदर्शयन् उक्तवान्

– ''भवतः मेधाशक्तिः अपूर्वा भविष्यति । तद्बलेन भवान् क्लिष्टकरीम् अपि समस्यां परिहर्तुं समर्थः भविष्यति । अतिकठिनस्य अपि रोगस्य निवारणे समर्थाः वैद्याः भवतः राज्ये भविष्यन्ति । भवान् यदि राजा भवेत् तर्हि एव एतत् सर्वं सेत्स्यति'' इति ।

ततः सः कुशलस्य पुरतः स्थित्वा – 'वरं याचतु' इति उक्तवान् । तदा कुशलः अवदत् – ''मम प्रजाः मदीयाम् आज्ञां सुग्रीवाज्ञां भावयेयुः । ये मम विरोधं करिष्यन्ति तेषां सर्वनाशकरणाय मम शक्तिः भवेत् । ये मयि विश्वसन्ति ते आनन्दसागरे निमग्नाः भवेयुः'' इति ।

''एवमस्तु । किन्तु यदि भवान् राजा भविष्यति तर्हि एव मम वरः फलकारी भविष्यति, न अन्यथा । अन्यच्च, मम वरः भवद्देशमात्रे फलं दास्यति, न अन्यत्र'' इति उक्त्वा भगवान् अदृश्यः जातः ।

सुशीलः कुशलः च राजधानीं प्रत्यागत्य राजानं दृष्ट्वा आत्मना प्राप्तस्य वरस्य विषयम् उक्तवन्तौ । सर्वं श्रुत्वा राजा अवदत् – ''राजा स्वप्रजाः पुत्रवत् पालयेत् । शत्रूणां संहारे च तस्य महत् सामर्थ्यं भवेत् । किन्तु एतदुभयम् अपि भवतोः एकस्मिन् नास्ति । एकैकस्मिन् एकैकं सामर्थ्यम् अस्ति । अहं भवतोः अन्यतरं राजानं कर्तुम्, अपरं सेनाध्यक्षं कर्तुं च शक्नोमि । किन्तु उभयोः अपि शक्तिः राजत्वप्राप्तेः अनन्तरम् एव फलकारिणी भविष्यति । उभयोः अपि शक्तिः देशस्य लाभाय यथा भवेत् तथा कर्तुं न दृश्यते कोऽपि मार्गः । अतः अहं किमपि निर्णेतुं न शक्नोमि । भवन्तौ जनतासमीपं गच्छताम् ।





तेषां मध्ये वसन्तौ तेषां प्रीतिं सम्पादयताम् । तेषां निमित्तं यद्यत् कर्तुं शक्येत तत् तान् उक्त्वा तेषाम् अङ्गीकारं प्राप्नुताम्'' इति ।

राज्ञः कथनस्य अनुगुणं सुशीलः कुशलः च जनानां समीपं गतवन्तौ । विक्रमसिंहः राज्यभारं मन्त्रिषु निक्षिप्य अरण्यं गत्वा तपः आरब्धवान् । मासत्रयाभ्यन्तरे तस्य पुरतः भगवान् प्रत्यक्षः जातः । भगवान् राज्ञः क्लेशं जानाति स्म । अतः सः अवदत् - ''वत्स ! सुशीलः कुशलः च अन्वर्थनामानौ । सुशीले सद्गुणाः बहवः सन्ति । कुशले कौशलानि बहूनि सन्ति चेदपि गुणानाम् अभावः दृश्यते । तयोः तपः प्रबलम् आसीत् । अतः तयोः कृते वरः दत्तः मया'' इति ।

तदा राजा विक्रमसिंहः अपृच्छत् - ''लोकपालक ! गुणवते सुशीलाय वरः दत्तः यत् तत् युक्तम् एव । गुणहीनाय कुशलाय किमर्थं वरः दत्तः भवता ?'' इति ।

''अहं तपसः कर्तुः नियमबद्धतां तपोनिष्ठां च पश्यामि । तपस्यतः गुणावगुणस्य वरदानस्य च न कोऽपि सम्बन्धः । तयोः कतरः राजा भवेत् इति प्रजाः एव निर्णयन्तु नाम । प्रजासु अपि गुणग्राहिणः स्वार्थसाधकाः च भवन्ति । भवान् राज्यं द्विधा विभजतु । ये सुशीलम् इच्छन्ति ते एकस्मिन् भागे वसन्तु । कुशलम् इच्छन्तः अपरभागे वसन्तु । तौ तत्तद्भागस्य राजा भवेताम् । एतेन भवतः समस्या परिहृता भविष्यति । प्रजाः तु विचिन्त्य राज्ञः चयनं कुर्वन्ति । अतः सत्फलं दुष्फलं वा ते प्राप्नुयुः । कर्मानुगुणं फलं प्राप्यते जनैः । अतः भवता चिन्ता न करणीया'' इति उक्त्वा देवः अदृश्यतां गतः ।

'जनाः गुणवन्तम् एव राजानं कुर्युः । गुणहीनं के वा इच्छेयुः' इति चिन्तयन् विक्रमसिंहः राजधानीं प्रत्यागत्य सुशीलं कुशलं च राजत्वेन उद्घोष्य - 'ये यम् इच्छन्ति ते तस्य अनुसरणं कर्तुम् अर्हन्ति' इति अवदत् ।

बहवः जनाः सुशीलं स्वराजं मतवन्तः । केचन कुशलं स्वराजं भावितवन्तः । जनसङ्ख्यायाः आधारेण महतः भागस्य राजा अभवत् सुशीलः । कुशलः अल्पस्य भागस्य राजा जातः ।

वेतालः एवं कथां समाप्य अवदत् - ''हे राजन् ! विक्रमसिंहः यत् निर्णीतवान् तत्र मम सन्ति केचन सन्देहाः । विक्रमसिंहः प्रजाः

पुत्रवत् पश्यति स्म । यः प्रजानां हितम् एव वररूपेण प्रार्थितवान् सः सुशीलः एव समग्रस्य देशस्य राजा करणीयः आसीत् तेन । किन्तु विक्रमसिंहः तथा न कृतवान् । किं राज्ञः व्यवहारः विलक्षणः इति न भासते ? कुशलः गुणवान् न इति ज्ञात्वा अपि किमर्थ तस्मै राजत्वं दत्तवान् सः ? अन्यच्च, भगवान् वदति - 'निष्ठापूर्विकां तपस्यां दृष्ट्वा मया वरः दीयते, न तु गुणः दृश्यते' इति । किम् एतत् उचितम् ? देवः एव यदि गुणरहिताय वरं दद्यात् तर्हि लोकयात्रायाः का गतिः ? एतेषां मम प्रश्नानां समाधानं ज्ञात्वा अपि यदि भवान् न वदेत् तर्हि भवतः शिरः सहस्रधा भग्नं भवेत्'' इति ।

तदा त्रिविक्रमः अवदत् - ''यत्र सुख-शान्त्यादयः भवन्ति, यत्र च शत्रुपीडा न भवति तत्रैव प्रजाः आनन्देन जीवितुम् अर्हन्ति । अतः प्रजारञ्जकः, शत्रुनाशकः च भवेत् राजा । एतत् उभयं न सुशीले अस्ति, न वा कुशले । उभयोः अपि अपेक्षित-योग्यतायाः अर्धभागमात्रम् एव अस्ति । यदि विक्रमसिंहः सुशीलं राजानं कुर्यात् तर्हि कुशलः सुशीलं हत्वा स्वयं सिंहासनम् आरोहेत् । अतः राजा भगवतः सूचनां पालयन् उभौ अपि राजानौ कृतवान् । ये यं राजत्वेन स्वीकृतवन्तः ते तम् अनुसृतवन्तः । एतस्य फलस्य अनुभोक्तारः अपि ते एव । अतः विक्रमसिंहस्य निर्णयः समुचितः एव । गुणहीनाय वरः किमर्थं दत्तः इति भवतः अपरः प्रश्नः । गुणहीनः अपि यदि निष्ठया तपः करोति तर्हि तस्मै भगवान् वरं दद्यात् एव । पुराणकथादिषु अपि वयम् एतदेव पश्यामः । गुणवत्ता गुणहीनता वा वरप्राप्तेः कारणं न । गुणहीनाः यदि वरं प्राप्नुवन्ति तर्हि ते अन्ते सर्वनाशम् एव प्राप्नुवन्ति स्वयम् । तेषां कर्माणि एव तादृशं कारयन्ति । अतः तत्र भगवता किमपि करणीयं न भवति । अतः एव भगवान् तपस्यतः तपोनिष्ठामात्रं पश्यति । एतस्मात् लोक-यात्रायाः न कापि हानिः'' इति ।

एवं वदता त्रिविक्रमेण मौनभङ्गः कृतः आसीत् । अतः शवान्तर्गतः बेतालः ततः अदृश्यः भूत्वा यथापूर्वं वृक्षस्य शाखाम् अवलम्बितवान् ।



## पुराणकथावली - ७

# देवाः अपि यदा वृद्धाः अभवन् तदा...



मुनिः दुर्वासाः शीघ्रकोपी । यदि कश्चित् तस्य कोपं जनयति, तस्य अप्रियतां वा करोति तर्हि सः तस्य शापपात्रतां गच्छेत् एव । तस्य यौगिकी शक्तिः तावदुग्रा आसीत् यत् तदीयं शापं निरोद्धुं काऽपि शक्तिः न प्रभवति स्म, स्वयं सोऽपि न शक्नोति स्म । किन्तु सः स्वस्य शापं परिष्कर्तुं, परिणामं न्यूनीकर्तुं वा शक्नोति स्म । प्रमुखः अंशः नाम तदीयः शापः अपि अन्ते जनानां हिताय एव भवति स्म ।

वयं सर्वान् देवान् 'देव'शब्देन एव निर्दिशामः, किन्तु सर्वे देवाः न समानाः । ब्रह्मविष्णुमहेश्वरादयः श्रेष्ठस्तरीयाः । रामकृष्णादयः विष्णोः अवतारभूताः । देवानाम् आवासभूमिः अस्ति स्वर्गः । देवलोकः इत्यपि उच्यते सः । तत्र वसन्तः सर्वे आनन्दयुक्ताः, शक्तिसम्पन्नाः, दयामयाः च भवन्ति । यदा यदा आवश्यकता भवति तदा मानवानां हिताय ते अवतारं प्राप्नुवन्ति । आ बहोः कालात् देवदानवयोः युद्धं प्रचलति । दानवाः तु देवानाम् इव मानवानाम् अपि शत्रवः । इन्द्रः देवानां राजा । देवाः अमराः अजराः च ।

कदाचित् दुर्वासाः देवलोकं गतवान् । देवाः तं महता आदरेण स्वागतीकृत्य गौरवद्योतनाय विशिष्टां मालां काञ्चित् तस्य कण्ठे अर्पितवन्तः । मालास्थानि पुष्पाणि नयनमनोहराणि परिमलपूर्णानि च आसन् ।

दुर्वाससे एषा माला अरोचत । किन्तु विरक्ताय मुनये स च हारः कियत्कालं सन्तोषं दद्यात् ? सः अचिन्तयत् यत् एतत् इन्द्राय

दास्यामि इति । ततः देवसभां गतः सः तां मालाम् इन्द्रस्य कण्ठे अर्पितवान् । एतस्मात् इन्द्रः नितरां सन्तुष्टः जातः ।

एतदनन्तरं मुनिः भूलोकं प्रतिगतवान् । इन्द्रः तं सगौरवं सम्प्रेष्य स्वस्य वाहनस्य ऐरावतस्य समीपं गतवान् । ऐरावतं दृष्ट्वा इन्द्रः अचिन्तयत् यत् एषः अपूर्वः हारः यदि ऐरावतस्य कण्ठे भवेत् तर्हि एतस्य शोभा दशगुणितं वर्धेत इति । अतः सः तां मालाम् ऐरावतस्य कण्ठे अर्पितवान् ।

ऐरावतः एतां मालां प्राप्य नितरां सन्तुष्टः । इन्द्रः मालाधारणात् जातम् ऐरावतस्य शोभातिशयं मनसा श्लाघमानः स्वस्य आस्थानं प्रति अगच्छत् ।

पुष्पमाला अतीव परिमलयुता आसीत् खलु ? अतः तस्याः सौगन्ध्येन भ्रमराः आकृष्टाः जाताः । ते ऐरावतस्य कण्ठं परितः भ्रमन्तः शब्दं कृतवन्तः । तेषां निरन्तरध्वनिः ऐरावतम् अपीडयत् । तेषां पीडां निवारयितुम् ऐरावतः तां मालां छिन्नविच्छिन्नां कृतवान् । तेन भ्रमराः दूरं गताः । ऐरावतश्च पीडानिवृत्तितः सन्तुष्टः जातः ।

एषा घटना कैश्चित् अन्यथा निवेदिता दूर्वाससे । इन्द्रः मम उपायनविषये अनादरं प्रकटयन् स्वस्य वाहनस्य कण्ठे अर्पितवान्, सः गजश्च क्रीडाव्याजेन तां मालां विच्छिद्य अक्षिपत् इति अचिन्तयत् दूर्वासाः । एतस्मात् तेन कोपः प्राप्तः ।

'इन्द्रः देवानां राजा । यथा राजा तथा प्रजाः । एते देवाः गर्वयुक्ताः एव । स्वस्य अजरत्वकारणतः ते एवं दर्पेण व्यवहरन्ति' इति विचिन्त्य सः कोपेन शापं दत्तवान् यत् इतः परं देवाः अपि मानवाः इव जरां प्राप्नुवन्तु इति ।



एतत् शापवाक्यं मुनयः श्रुतवन्तः । ते झटिति तम् उक्तवन्तः - ''मुनिवर्य ! किम् एतत् अनुचितं कृतं भवता ?'' इति ।

तदा मुनिना दूर्वाससा स्वस्य शापस्य दुष्परिणामः स्वयं ज्ञातः । 'यदि देवाः वार्धक्यं प्राप्नुयुः तर्हि दानवाः प्राबल्यं प्राप्य सर्वान् देवान् नाशयेयुः । भूमेः शासनम् अपि तेषाम् अधीनं भवेत् । दानवाः शासकाः यदि भवन्ति तर्हि भूलोके प्रगतिः कुण्ठिता भवेत् । दानवाः कलहशीलाः प्रजापीडकाः च । ते मानवानां स्वातन्त्र्यम् अपहरन्तः सत्यज्ञानयोः मार्गस्य अवरोधं करिष्यन्ति' इत्यादिकं सर्वम् अवगतं तेन ।

'' देवाः जरां यथा न प्राप्नुयुः तथा कर्तुं किं कोऽपि मार्गः अस्ति ?'' इति पृष्टवन्तः मुनयः ।

तदा चिन्ताग्रस्तान् मुनीन् अवदत् दूर्वासाः - ''मम शापः प्रतिस्वीकर्तुं तु न शक्यः । यदि देवाः पूर्ववत् अजराः भवितुम् इच्छन्ति तर्हि तैः क्षीरसागरस्य मथनं कृत्वा पुनरपि अमृतं प्राप्य पातव्यम् । एतदर्थम् एषः एकः एव मार्गः'' इति ।

शापकारणतः शोकगर्ते पतितानां देवानां पुरतः इदानीं कश्चन आशाकिरणः दृष्टः ।

किन्तु क्षीरसागरस्य मथनं कथम् इति समस्या उद्भूता । सर्वे देवाः सम्भूय अपि तत् कार्यं कर्तुम् असमर्थाः एव । एतदर्थं दानवानां साहाय्यम् अत्यावश्यकम् एव आसीत् ।

अमृतस्य भागस्य प्राप्तेः आशया दानवाः क्षीरसागरमथनकार्ये साहाय्यं कर्तुं सन्नद्धाः जाताः । तैः अन्ते अमृतं प्राप्तम् उत न इत्यादिकं तु नात्र प्रस्तुतम् ।

मालाविषये मया अनुचिततया व्यवहृतम् इत्यतः एव देवैः शापः प्राप्तव्यः अभवत् इत्येतत् स्मरन् ऐरावतः नितरां लज्जितः खिन्नः च । सः देवेभ्यः स्वस्य मुखं प्रदर्शयितुम् अनिच्छन् क्षीरसागरतलम् आश्रितवान् ।

यदा क्षीरसागरमथनं प्रवृत्तं तदा तेनापि बहिः आगन्तव्यम् अभवत् । किन्तु एतदवसरे सः पूर्णतया श्वेततां प्राप्तवान् आसीत् । क्षीरसागरवासतः एतत् परिवर्तनं जातम् आसीत् तस्मिन् । अनन्तरं सः यथापूर्वम् इन्द्रस्य वाहनं जातः ।



# अभिनयकौशलम् आस्थाने एव





पि. प्रवीणकुमारः
बळ्ळारि



अर्चना
जगताप,
साङ्गली

राज्ञः समालोचन-प्रकोष्ठः । तस्मिन् प्रकोष्ठे स्थिताः सर्वे मौनेन आसन् । तत्र आसन् मारुतपुरस्य राजा महेन्द्र-वर्मा, तदीयः पुत्रः विजयादित्यः, मन्त्री सिद्धमतिशर्मा च । राजा महेन्द्रवर्मा पुत्रं सिंहासने उपवेशयितुम् इच्छति स्म । तद्विषये वार्तालापाय ते त्रयः तत्र सम्मिलिताः आसन् । किन्तु राज-कुमारः पितुः विचारं निराकुर्वन् आसीत् ।

''किमर्थं सिंहासनारोहणं न इच्छति भवान् ? भवतः निराकरणस्य किं कारणम् ?'' इति राजा महेन्द्रवर्मा अपृच्छत् ।

तदा राजकुमारः अवदत् - ''अहं शासन-क्लेशं राजनैतिकव्यवहारकष्टं च न इच्छामि सर्वथा । अहम् उत्तमः नटः भवितुम् इच्छामि'' इति ।

एतत् श्रुत्वा राजा मौनम् आश्रितवान् ।

''भवान् स्वकर्तव्यात् विमुखः भवितुं न अर्हति । राज्यपालनं तु क्षत्रियस्य आद्यं कर्तव्यम् । तत् विहाय भवान् कथम् अभिनये प्रवृत्तिमान् भवितुमर्हति ?'' इति अपृच्छत् मन्त्री ।

''अभिनयः काचित् अपूर्वा कला । कलादेव्याः उपासनं मह्यं रोचते । रङ्गमञ्चे मम अभिनयं दृष्ट्वा जनाः हर्षोद्गारं प्रकटयेयुः इति मम इच्छा । अतः अहं कलापोषिणीसभया आयोज्यमानम् अभिनयप्रशिक्षणशिबिरं प्रवेष्टुम् इच्छामि । भवन्तः कुतो वा मम भ्रातरं जयन्तं सिंहासने न उपवेशयन्ति ? सः अपि राजकुले एव खलु जातः ?'' इति अवदत् विजयादित्यः ।

एतत् श्रुत्वा क्रोधं प्राप्य अवदत् महेन्द्रवर्मा - ''रे मूर्ख ! राज्यस्य शासनाय भवते प्रशिक्षणं




दत्तम् । भवान् तु अभिनयेन कालं व्यर्थीकर्तुम् इच्छति । किम् एवं कुर्वतः भवतः लज्जा न भवति ?'' इति







सिद्धमतिशर्मा महाराजं सान्त्वयन् – ''महाराज ! एतद्विषये चिन्तनाय राजकुमाराय किञ्चित् समयदानं वरम्'' इति । राजा एतत् अङ्गीकृतवान् ।

दिनद्वयस्य अनन्तरं ते पुनरपि समालोचनप्रकोष्ठे सम्मिलिताः । राजकुमारः गम्भीरवदनः आसीत् ।

सिद्धमतिशर्मा अवदत् – ''राजकुमार ! कलापोषिणीसभायाः अभिनयप्रशिक्षणशिबिरं प्रति गमनाय भवतः पिता अनुज्ञां दत्तवान् अस्ति । किन्तु ..., सः भवत्तः किञ्चित् अपेक्षते...'' इति ।

एतत् श्रुत्वा राजकुमारः नितरां सन्तुष्टः । अनुमतिः प्राप्ता इत्यतः यत्किमपि कर्तुं सिद्धः जातः सः ।

तदा पिता अवदत् – ''कोटिपुरसंस्थानस्य शासनव्यवहारः कानिचित् दिनानि भवता द्रष्टव्यः'' इति ।

''अस्तु'' इति उक्त्वा राजकुमारः तस्मिन् एव दिने कोटिपुरं प्रति प्रस्थितवान् ।

कोटिपुरं प्राप्य आस्थानं प्रति यावत् सः प्रस्थातुम् उद्युक्तः तावता कश्चन भटः एकं पत्रम् आनीय दत्तवान् ।

पित्रा लिखितं पत्रं तत् । तत्र लिखितम् आसीत् यत् महाराज्ञी सर्पेण दष्टा अस्ति इति । एतां वार्तां ज्ञात्वा राजकुमारः क्षणकालं स्तब्धः । तावता कोटिपुरस्य अधिकारी कश्चन आगत्य निवेदितवान् – ''आस्थाने सर्वे भवतः प्रतीक्षां कुर्वन्तः सन्ति'' इति ।

राजकुमारः मुखे मन्दहासं धृत्वा आस्थानं गतवान् । संस्थानसम्बद्धाः अनेकाः समस्याः अधिकृत्य





सायङ्कालपर्यन्तम् अधिकारिभिः सह समालोचनं कृतवान् सः ।

अनन्तरदिने प्रातः विजयादित्यः राजोद्याने इतस्ततः सञ्चरन् आसीत् । तदा संस्थानस्य कश्चन अधिकारी आगत्य युवराजस्य हस्ताङ्कनम् इच्छन् अवदत् – ''युवराजवर्य ! संस्थानस्य विविधेषु भागेषु कासाराणां निर्माणाय दशसहस्रस्य सुवर्णनाणकानां दानस्य अङ्गीकरणाय सज्जीकृतं पत्रम् एतत्'' इति ।

''एवम् ! कति कासारान् निर्मातुम् एतावत् धनम् अपेक्ष्यते भवद्भिः ?'' इति अपृच्छत् राजकुमारः ।

''वयं प्रतिवर्षं भवत्पित्रे नियततया करं यच्छामः राजकुमारवर्य ! तस्यैव कश्चन भागः इष्यते अस्माभिः । एतावता धनेन पञ्चषाः कासाराः निर्मिताः भवेयुः'' इति अवदत् अधिकारी ।

विजयादित्यः स्वस्य कोपं निगूहन् उक्तवान्

– ''गते वर्षे भवद्भिः दशलक्षसुवर्णनाणकात्मकः करः दत्तः, तथैव त्रिलक्षसुवर्णनाणकात्मकम् ऋणं स्वीकृतं च । किम् एतत् विस्मृतं भवता ?'' इति । अधिकारी निरुत्तरः जातः ।

तस्य दिनस्य रात्रौ विजयादित्येन पितुः सकाशात् अपरं पत्रं प्राप्तम् । तत्र लिखितम् आसीत् यत् महाराज्ञी अपायस्थितितः विमुक्ता सती स्वास्थ्यं प्राप्नुवती अस्ति इति । एतस्मात् निश्चिन्ततां प्राप्तवान् विजयादित्यः शयनार्थं गतवान् ।

मध्यरात्रे अपायघण्टा वादिता । तस्मात् विजयादित्यः जागरणं प्राप्तवान् । तेन ज्ञातं यत् समीपस्थात् अरण्यात् आगताः लुण्ठाकाः दीपदण्डान् गृहीत्वा सञ्चरन्तः जनान् लुण्ठयन्तः सन्ति इति ।

एतत् श्रुत्वा राजकुमारः स्वगतम् अवदत् – 'एते वराकाः लुण्ठाकाः न वृत्तिनिपुणाः । कौमुदीयुक्ते दिने दीपदण्डान् गृहीत्वा लुण्ठनं कुर्वन्ति एते !' इति ।





ततः घण्टाभ्यन्तरे तदीयाः भटाः तान् लुण्ठाकान् गृहीत्वा कारागारे स्थापितवन्तः ।

अनन्तरदिने पित्रा प्रेषिता वार्ता तेन प्राप्ता । पिता सूचितवान् आसीत् यत् कोटिपुरात् प्रत्यागन्तव्यम् इति ।

प्रत्यागतं तं मन्त्री सिद्धमतिशर्मा अवदत् – ''कलापोषिणीसभायाः प्रशिक्षणशिबिरं प्रति गमनाय सर्वविधसन्नाहाः कृताः सन्ति युवराज !'' इति ।

''इतः कोटिपुरं प्रति गमनानन्तरं मया राज्ञः पात्रं निरूढम् । तत् निर्वहणम् अत्युत्तमम् एव आसीत् । तत्र वेषभूषादयः, पूर्वाभ्यासः, सिद्ध-वाक्यानि, रङ्गमन्दिरं, दीपाः वा न आसन् । तथापि मया उत्तमतया अभिनयः कृतः । सर्वे जनाः दैनन्दिनजीवने मुखावरणं धृत्वा व्यव-हरन्ति । राज्ञः तु सा प्रवृत्तिः अधिका । दैनन्दिनजीवने बहुविधाः अभिनयाः करणीयाः भवन्ति । एतदर्थम् अधिकं प्रशिक्षणं न आवश्यकम् । अन्यच्च, मया अवगतम् अस्ति यत् मम पितुः आस्थाने एव मदीयम् अभिनय-कौशलं प्रदर्शनीयम् अस्ति इति । अतः अहं पितुः अपेक्षायाः अनुगुणं राज्यभारं निर्वक्ष्यामि'' इति ।



तावता तत्र उपस्थितः महेन्द्रवर्मा पुत्रस्य कथनं श्रुतवान् । एतस्य श्रवणात् सः नितरां सन्तुष्टः । सः पुत्रं प्रेम्णा पश्यन् अवदत् – ''वत्स ! इतः सप्ताहाभ्यन्तरे भवतः पट्टाभिषेकः भविष्यति'' इति ।

राजकुमारः यथा न पश्येत् तथा राजा मन्त्री च विजयसूचकस्य मन्दहासस्य विनिमयं कृतवन्तौ ।





# पुनरपि सस्यश्यामला भूमिः कथं स्यात् ?



सोमनाथबारिक्
जयपुर

विक्रमभानुः विक्रमपुरस्य राजा । सः भोगेषु निमग्नः सन् दिनानि यापयति स्म । अतः सः प्रजानां देशस्य वा स्थितिं, जनानां समस्यां वा न जानाति स्म ।

एकदा सः गुप्तचराणां द्वारा वार्तां प्राप्तवान् यत् जनाः आहाराभावतः मरणं प्राप्नुवन्तः सन्ति इति ।

''देशे आहारस्य अभावः किमर्थम् ?'' इति सः मन्त्रिणम् अपृच्छत् ।

''महाराज ! देशे अल्पा अपि वृष्टिः नास्ति । वृष्ट्यभावतः न दृश्यते सस्यवृद्धिः । ततः अभवत् जनानाम् आहाराभावः'' इति समस्यां विवृतवान् मन्त्री ।

''मेघाः कुत्र गताः ? देशे किमर्थं वृष्टेः अभावः ? वयं पुनः वृष्टिं कथम् आनेतुं शक्नुयाम ?'' इति अपृच्छत् राजा । मन्त्री निरुत्तरः आसीत् ।

''समस्यापरिहाराय वयम् एवं करवाम । यः समस्यां परिहर्तुं शक्नोति, वृष्ट्यानयनोपायं यश्च सूचयति तस्मै शतं सुवर्णनाणकानि पुरस्काररूपेण दास्यन्ते इति उद्घोषणं कारयाम'' इति अवदत् राजा ।

एतदनुगुणं देशे सर्वत्र उद्घोषणं कारितम् । किन्तु कोऽपि वृष्ट्यानयनमार्गं सूचयितुं शक्तः न जातः ।

राधुः कश्चन सामान्यः कृषिकः । तस्य लघुवाटिका काचित् आसीत् । विशेषावधानेन तां पोषयति स्म सः । अतः तत्रत्यानि सस्यानि वृक्षाः च हरिद्वर्णैः सुशोभन्ते स्म, या च शोभा समीपस्थवृक्षेषु न भवति स्म ।

एकदा राधुः स्वक्षेत्रे कार्यं कुर्वन् यदा आसीत् तदा उभौ शुकौ आगत्य राधोः अनतिदूरे तृणमय्यां भूमौ उपविष्टवन्तौ । तौ श्रान्तौ दुःखितौ च दृश्येते स्म ।

तयोः अन्यतरः राधुम् अपृच्छत् - ''आर्य ! किं भवत्क्षेत्रस्य कासारे आवां जलं पातुं







किशोरकुमारसिंहः
मयूरभञ्ज्

शक्नुयाव ? आवां नितरां पिपासितौ स्वः'' इति ।

''कुतः प्रश्नः ? कामं पिबताम्'' इति प्रेम्णा अवदत् राधुः ।

शुकौ तं कृतज्ञतां वदन्तौ जलं पीतवन्तौ । तृप्तिं प्राप्य तौ समीपे स्थितस्य कस्यचित् वृक्षस्य शाखायाम् उपविष्टवन्तौ ।

''अस्माकं देशे किमर्थम् एवं जलम् अतिदुर्लभं जातम् एषु दिनेषु ? अस्माभिः किं वा अपराद्धम् एतद्विषये ?'' इति एकः शुकः अपृच्छत् ।

''किमत्र आश्चर्यम् ? न अरण्यम्, न ग्राम-परिसरे वृक्षपङ्क्तयः । अतः मेघाः अवरुद्धाः अभवन्तः अग्रे गताः भवन्ति । वृक्षाणां मूलानि जलधरणे असमर्थानि इत्यतः जलम् अधोधः अगच्छत् । अतः एतस्य देशस्य जनैः सुमहान् अपराधः कृतः अस्ति'' इति परिस्थितेः विश्लेषणम् अकारेत् अपरः ।

''एवम् !'' इति साश्चर्यम् अपरम् अवदत् प्रथमः ।

''आम् । एतस्य कृषिकस्य कासारम् एव पश्यतु । कुतः एषः शुष्कः न जातः ? एतं परितः वाटिका अस्ति । सा च एतेन सम्यक् संरक्षिता । अतः अत्र नास्ति शुष्कता । यदि देशे सर्वत्र सर्वैरपि एवमेव कृतं स्यात् तर्हि देशे क्षामः एव न अभविष्यत्'' इति विवृतवान् सः शुकः ।

''भवता युक्तम् उक्तम्'' इति उक्तवान् अपरः । तदनन्तरं तौ उभौ अपि शुकौ ततः उड्डीय गतवन्तौ ।

राधुः अनन्तरदिने एव महाराजसमीपं गतवान् । आत्मना शुकयोः यत् सम्भाषणं श्रुतं तत् महाराजं श्रावितवान् । राजा एतम् उपायं श्लाघितवान् । राधवे पुरस्करदानम् अपि प्रतिज्ञातवान् ।

ततः सः वृक्षारोपणविषये नियमं कृतवान् यत् राज्ये स्थिताः सर्वे प्रौढाः दिने एकं वा सस्यम् आरोपयेयुः एव इति । 'एषा आज्ञा येन न पाल्यते सः कठोरतया दण्डयिष्यते' इति उद्घोषणं कारितवान् सः । राजा अस्माकं हिताय एव एताम् आज्ञां कृतवान् इति जनाः अवगतवन्तः । अतः ते ताम् आज्ञां विना लोपं पालितवन्तः ।

गच्छता कालेन देशस्य स्थितिः परिवृत्ता । ऋतुवाताः समये आगताः । योग्या वृष्टिः अपि जाता । अतः देशस्य भूमिः सस्यश्यामला जाता ।





# असन्तृप्तिः जनयति महत् दुःखम्





पि. कविता
मधुरै

अजयः विजयः च सुहृदौ । तयोः मैत्री सुदृढा । तौ द्वादशकक्ष्यायां पठतः । प्रतिदिनं तौ विद्यालयं सहैव गच्छतः । तयोः मातापितरौ निर्धनौ । तौ इच्छतः स्म यत् अस्मत्पुत्रः सम्यक् अध्ययनं कृत्वा उत्तमम् उद्योगं प्राप्य परिवारस्य पोषणाय सहकरिष्यति इति ।

तयोः सुहृदोः स्वभावे आसीत् महान् भेदः । यत् अस्ति तेन तृप्तिं प्राप्नोति स्म अजयः । किन्तु विजयः न तथा । यत् प्राप्तं तेन तृप्तिः न भवति स्म तस्य । यदा इड्ली प्राप्यते तदा सः



दोसाम् इच्छति । यदा दोसा प्राप्यते तदा सः पूरिकाम् इच्छति स्म । पूरिका यदा प्राप्यते तदा अपरस्मिन् इच्छा भवति स्म तस्य ।

एकदा विद्यालयं प्रति गमनसमये विजयः अवदत् - ''अजय ! यदि आवां त्रिचक्रिकया विद्यालयं गच्छेव तर्हि, अहो, कियान् आनन्दः स्यात् !'' इति ।



''आवां तु विद्यालयात् अनतिदूरे वसावः । त्रिचक्रिकया गमनस्य का वा आवश्यकता आवयोः ?'' इति अवदत् अजयः ।

''यदि आवां त्रिचक्रिकया गच्छेव तर्हि अस्माकं मित्राणि आवां साश्चर्यं पश्येयुः । तत् इच्छामि अहम्'' इति अवदत् विजयः ।

''भवता स्वगृहस्य आर्थिकस्थितिः अपि चिन्तनीया । त्रिचक्रिकानिमित्तं यः व्ययः भवेत् तं दातुं किम् अस्मन्मातापितरौ शक्नुतः ?'' इति पुनः अपृच्छत् अजयः ।

किन्तु विजयः स्वविचारं न परित्यक्तवान् । मातापित्रोः अङ्गीकारं कथमपि प्राप्य त्रिचक्रिकया विद्यालयं प्रति गमनम् आरब्धवान् एव सः ।

ये तेन सह त्रिचक्रिकया गच्छन्ति ते न उत्तमाः इत्यंशः अजयेन परिलक्षितः । अतः सः विजयम् अवदत् - ''मित्र ! एते दुष्टाः इव परिलक्ष्यन्ते । एतेषां सहवासं परित्यजतु'' इति ।

''भवान् मह्यम् असूयति । अतः एव एवं वदति भवान्'' इति अवदत् विजयः ।

''न असूया अत्र कारणम् । धूमपाने सुरापाने च निरताः मया दृष्टाः ते । भवान् नष्टः भवेत् इति मम चिन्ता । अतः तेषां सहवासतः दूरे तिष्ठतु कृपया'' इति अवदत् अजयः ।

विजयः मित्रस्य कथनविषये असन्तोषं प्रकटयन् उक्तवान् - ''धूमपाने सुरापाने च को



किशोरकुमारसिंहः
मयूरभञ्ज्

दोषः ? सुखस्य अनुभवाय स्थितः कालः एषः । एतादृशविषये मां मा उपदिशतु कृपया ।''

सः नूतनमित्राणां सहवासतः विशेषानन्दं प्राप्नोति स्म । एकदा ते विजयम् उक्तवन्तः - ''अद्य रात्रौ किञ्चन स्नेहमेलनम् अस्ति । अवश्यम् आगन्तव्यं भवता'' इति ।

विजयः तेषु मेलनेषु भागवहनम् आरब्धवान् । एतेषां रहस्यमेलनानां प्रभावतः सः मादकद्रव्यव्यसनी जातः ।

मातापितरौ यदा विद्यालयविषये पृष्टवन्तौ तदा सः असत्यम् अवदत् । 'निर्धनौ मातापितरौ मम भविष्यविषये बहुधा स्वप्नान् पश्यन्ति' इति सः विस्मृतवान् ।

कदाचित् विजयः तत्सुहृदः च कस्याश्चित् शालायाः पुरतः स्थिते यानस्थानके स्थितवन्तः आसन् । ते बालान् अध्यापकान् च अनुसृत्य यानम् आरुह्य जनानां कोषे स्थितं धनम् अपहरन्ति स्म । एवं चौर्येण प्राप्तेन धनेन मादकद्रव्यं क्रीणन्ति स्म ते ।

तस्मिन् अपि दिने ते यानम् आरुह्य एकस्याः वृद्धायाः धनम् अपहर्तुं प्रयासं कृतवन्तः । तेषां प्रयत्नं सा अकस्मात् दृष्टवती । परितः स्थितान् तान् दृष्ट्वा भीता सा यानात् बहिः उत्कूर्दितवती । अधः पतिता सा व्रणिता जाता ।

विजयः तत्सुहृदः च ततः पलायनं कर्तुम् उद्युक्ताः । तावता यानस्थाः जनाः तान् अनुसृत्य गृहीतवन्तः । क्रुद्धाः ते तान् सम्यक् ताडितवन्तः । एषा वार्ता विजयस्य मातापितृभ्याम् अपि ज्ञाता । तौ एतत् ज्ञात्वा नितरां दिग्भ्रान्तौ ।

अजयः अपि एतां वार्तां ज्ञातवान् । सः झटिति विजयसमीपं गतवान् । तं दृष्ट्वा लज्जया शिरः अवनमय्य पश्चात्तापेन अवदत् विजयः - ''मित्र ! मया भवतः हितवचनं न श्रुतम् । ततः अहं मादकद्रव्यसेवी चोरः च संवृत्तः । इतः परं का गतिः मम ? मातापित्रोः कृते कथम् अहं मुखं दर्शयामि ?'' इति ।

अजयः तं सान्त्वयन् अवदत् - ''मित्र ! इदानीं भवान् स्वस्य दोषं स्वयम् अवगतवान् अस्ति । अतः प्रगतिसाधनं न क्लेशाय । अहं भवतः पितरौ दृष्ट्वा तयोः कोपं शमयिष्यामि । भवान् चिन्तां मा करोतु'' इति ।

दुष्टानां सहवासः, असन्तृप्तिः च कीदृशं



परिणामं जनयति इति सः अवगतवान् आसीत् । यावत् अस्ति तावता तृप्तिः एव श्रेयस्करी इत्येतत् सत्यं ज्ञातम् आसीत् तेन । अतः सः स्वजीवनशैलीं परिवर्तितवान् । योग्यः सुहृत् नाम कः इत्यपि ज्ञातम् आसीत् तेन ।



# निवृत्तः प्राणापायः





अरुन्धती
सरकार्
कोलकता

"पुङ्गव ! मम प्रयोगं नाशितवान् खलु भवान् ! अये अविवेकिशुनक ! निर्गच्छतु इतः" इति उच्चैः आक्रोशनं कृतवती रिया । पुङ्गवः ततः निर्गतवान् । रिया पाकशालां गच्छन्ती अवदत् – "मम अपूर्वः प्रयोगः विनष्टः । एतत् जातं पुङ्गवस्य कारणतः । किमहं करवाणि इदानीम् ? अविवेकी सः पुङ्गवः न जानाति यत् कीदृशी हानिः कृता इति ।"

रियायाः प्रयोगः इतोऽपि समाप्तः न आसीत् । सा द्वयोः रासायनिकवस्तुनोः मेलनेन मशकनिवारणार्थम्, अन्यकीटनिवारणार्थं च औषधसज्जीकरणं किं शक्यम् इति परीक्षमाणा आसीत् । तस्याः एषः प्रयोगः गृहे एव सज्जीकृतायां लघुप्रयोगशालायां प्रचलति स्म । तत्र कस्यापि प्रवेशः न आसीत् । तस्याः अग्रजः राजशेखरः, शुनकः पुङ्गवः च तस्याः प्रयोगस्य नाशने आसक्तौ आस्ताम् ।

रिया विज्ञानप्रिया । विज्ञानक्षेत्रे काऽपि सिद्धिः प्राप्तव्या इति तस्याः इच्छा । विद्युच्छक्तिविषये, शक्तिवाहकस्य अवाहकस्य विषये च तस्याः विशेषासक्तिः ।

वर्षाकाले भवति स्म राजशेखरस्य जन्मदिनम् । तन्निमित्तं सा विशेषकार्यक्रमं सङ्कल्प्य बन्धुमित्राणि निमन्त्रितवती आसीत् । तद्दिने तस्याः माता दूरदर्शनेन प्रसार्यमाणाम् एकां धारावाहिनीं पश्यन्ती आसीत् । राजशेखरस्य मित्राणि आनन्देन गृहे सर्वत्र सञ्चरन्ति स्म ।



किञ्चित्कालानन्तरं ते एकत्र उपविश्य कमपि विषयम् अधिकृत्य चर्चाम् आरब्धवन्तः । ततः जन्मदिननिमित्तकस्य मधुरस्य शीतपानीयस्य च वितरणं जातम् । अनन्तरं ते क्रीडायां मग्नाः जाताः । पुङ्गवः तु तैः सह एव धावन् मनः विनोदयन् अन्यान् अपि तोषयति स्म ।

एवं जन्मदिनाचरणोत्सवः सोत्साहं प्रचलन् आसीत् । तावता महान् वायुः आरब्धः ।

"अहो, आकाशे दृश्यन्ते कृष्णमेघाः । अचिरात् एव वृष्टिः भविष्यति इति भाति" इति उक्तवती रीतिका ।

"आम् । मेघान् पश्यामः चेत् तथैव भाति" इति उक्तवती रिया ।




के. श्रीरामः
राजमण्ड्री



अचिरात् एव महती वृष्टिः आरब्धा अपि ।

''हन्त ! एतस्यां वृष्टौ मम गृहं प्रति गमनं कथं सम्भवेत् ?'' इति महता आतङ्केन उक्तवती अमृता ।

''यदि वृष्टिः एवमेव अधिककालं भवेत् तर्हि मार्गाः सर्वे जलावृताः



भवेयुः'' इति उक्तवती रीतिका ।

''अम्ब ! भवती दूरदर्शनं स्थगयतु । वृष्टिकाले दूरदर्शनदर्शनम् अपायकरम्'' इति मातरं सूचितवती रिया ।

माता तस्याः वचने अवधानं न दत्तवती । तावता तडित् प्रस्फुरिता सशब्दम् । ''अम्ब ! दूरदर्शनसम्पर्कं निवारयतु । अन्यथा अपायः सम्भवेत्'' इति आतङ्केन पुनः उक्तवती रिया ।

क्षणानन्तरं पुनरपि मेघगर्जनम् । आकाशे तडितः स्फुरणं च । सर्वे विशालप्रकोष्ठं प्रति धावितवन्तः, यत्र च रियायाः माता दूरदर्शनं पश्यन्ती आसीत् ।

तत्रत्यं दृश्यम् आघातकरम् आसीत् । तडितः दुष्परिणामः घटितः आसीत् तत्र । तडित्कारणतः यदा दूरदर्शनं स्थगितं तदा विद्युत्सम्पर्कं स्थगयितुं गता रियायाः माता स्वयं विद्युत्सम्पर्केण अभिगृहीता आसीत् ।

पत्नीं रक्षितुं धावन्तं पितरम् उद्दिश्य उच्चैः उक्तवती रिया – ''तात ! तात ! मा...मा स्पृशतु ताम्'' इति । ततः धावन्ती गत्वा एकं शुष्कदण्डम् आनीय सा मातुः हस्ते लघुप्रहारं कृतवती । एतस्मात् मातुः हस्तः विद्युत्सम्पर्कहीनः जातः । सा च भूमौ पतितवती । राजशेखरः झटिति विद्युद्यन्त्रगृहं प्रति धावन् गत्वा तत्रत्यं विद्युत्तज्ञं नागेशम् आनीतवान् ।

तावता तत्रत्याः रियायाः मातरं प्रकोष्ठं नीत्वा प्रथमोपचारं कृतवन्तः । तस्यै पातुं जलं दत्तवन्तः । तेन अल्पे एव काले सा उल्लाघतां प्राप्तवती ।



नागेशः आगत्य विद्युत्सम्पर्कं निवारितवान् । ततः सः रियां प्रशंसितवान् – ''भवत्याः प्रसङ्गावधानता महतीं विपदं न्यवारयत् । अन्यथा मातुः मरणम् अभविष्यत् । युक्तं कृतं भवत्या'' इति ।

''तडित् दूरदर्शनयन्त्रं नाशयितुम् अपि अर्हति । द्रष्टॄणां प्राणान् अपहर्तुम् अपि अर्हति इति अहं जानामि स्म'' इति उक्तवती रिया ।

''आम् । भवत्याः वचनम् अवितथम्'' इति अवदत् नागेशः ।

तत्रत्याः सर्वे रियायाः प्रसङ्गावधानतां बुद्धिमत्तां च बहुधा प्रशसन्तः तस्याः धैर्यं विशेषतः अभिनन्दितवन्तः ।





# शठं प्रति शाठ्यम्






बि. अपर्णा
सिकन्दराबाद्


अमीरचन्दः ग्रामस्य महाधनिकः । ग्रामे स्थितान् अशिक्षितान् निर्धनान् सः बहुधा पीडयति स्म । सः केनचित् व्याजेन तेषां भूमिं सम्पत्तिं च स्वायत्तीकरोति स्म । एतादृशम् अवकाशम् एकम् अपि न व्यर्थीकरोति स्म सः ।

कदाचित् चम्पकः नाम कश्चित् बुद्धिमान् जनः निवासेच्छया तं ग्रामम् आगतवान् । सः कृषि-कार्याय काञ्चित् भूमिं क्रेतुम् इष्टवान् । सः अमीरचन्दसमीपं गत्वा पृष्टवान् – ''अहं काञ्चित् कृषिभूमिं क्रेतुम् इच्छामि । किं भवान् योग्येन मूल्येन एकां कृषिभूमिं मह्यं दद्यात् ?'' इति ।





'एषः मूर्खः इव भाति । एतस्य धनं वशीकरणीयं मया । ग्रामस्य उत्तरभागे या कृष्यनर्हा भूमिः अस्ति ताम् एतस्मै दास्यामि' इति अचिन्तयत् अमीर-चन्दः ।

चम्पकः धनं दत्त्वा तां भूमिं क्रीतवान् । यदा तत्र कृषिकार्यम् आरब्धं तदा तेन ज्ञातं यत् एषा कृष्यनर्हा भूमिः इति । 'अमीरचन्दः मां वञ्चितवान्' इति अचिन्तयत् सः ।

नितरां खिन्नः सः अमीरचन्दसमीपं गत्वा अवदत् – ''भवान् मां वञ्चितवान् । भवता या भूमिः मह्यं दत्ता सा कृष्यर्थं सर्वथा अनर्हा । अतः एषा भूमिः मास्तु मह्यम् । भूमिं प्रतिस्वीकृत्य मम धनं मह्यं प्रतिददातु'' इति ।

अमीरचन्दः धनस्य प्रत्यर्पणं निराकुर्वन् अवदत् – ''भोः, एषः वाणिज्यव्यवहारः । क्रयणात् पूर्वं भवता भूमिः सम्यक् परि-शीलनीया आसीत् । तत् भवता न कृतम् । अतः दत्तं धनम् अहं न प्रत्यर्पयामि'' इति ।

चम्पकः निरुत्तरः जातः । सः खेदेन ततः प्रतिनिवृत्तः । 'येन क्रमेण अमीरचन्दः मां वञ्चितवान् तेनैव क्रमेण मया अपि सः वञ्चनीयः' इति सङ्कल्पं कृतवान् चम्पकः । 'प्रतिमासं प्रथममङ्गलवासरे अमीर-चन्दः स्वभूमेः अवलोकनं करोति नियततया' इति सः ज्ञातवान् । अनन्तरमासस्य प्रथम-मङ्गलवासरे सः स्वस्य क्षेत्रे खननादिकार्ये निरतः जातः । अमीरचन्दः एतत् दूरात् दृष्टवान् । एतस्मिन् शुष्के क्षेत्रे एषः चम्पकः किं वा कुर्यात् एतावता परिश्रमेण ?' इति अचिन्तयत् सः ।

अनन्तरमासस्य प्रथमसोमवासरे चम्पकः नगरं गत्वा इक्षुदण्डानां राशिम् एव क्रीत्वा





वैशाखीपाला
२४ परगणाः
(उत्तरम्)



आनीतवान् । सः स्वस्य क्षेत्रे गर्तान् निर्माय तेषु बहून् इक्षुदण्डान् आरोपितवान् ।

अनन्तरदिने प्रातः एव सः अवशिष्टान् इक्षुदण्डान् क्षेत्रे राशीकृतवान् । अमीरचन्दस्य आगमनसमये सः आरोपितानाम् इक्षुदण्डानां कर्तनम् अभिनयन् स्थितवान् ।

अमीरचन्दः चम्पकस्य क्षेत्रे स्थितान् रसमयान् इक्षुदण्डान् दृष्ट्वा नितराम् आश्चर्यचकितः । इक्षुदण्डराशिं दृष्टवतः तु तस्य आश्चर्यस्य सीमा एव न आसीत् ।




चम्पकः अमीरचन्दसमीपं गत्वा - ''श्रीमन् ! भवतः क्रीते क्षेत्रे मया इक्षुकृषिः कृता, उत्तमं फलं प्राप्तं च । कृतज्ञतारूपेण मया समर्प्यमाणं एतम् इक्षुदण्डबन्धं स्वीकृत्य भवता अहम् अनुग्रहणीयः'' इति विनयेन उक्त्वा एकम् इक्षुदण्डबन्धं तस्मै समर्पितवान् ।

अमीरचन्दः बन्धतः एकम् इक्षुदण्डं स्वीकृत्य खादितवान् । इक्षुदण्डः मधुररसपूर्णः आसीत् । तस्य महत् आश्चर्यं जातम् । आत्मना विक्रीतां भूमिं प्रतिप्राप्तुम् इष्टवान् सः ।

''मया येन मूल्येन एषा भूमिः भवते दत्ता तेनैव मूल्येन अहम् एतां प्रतिप्राप्तुम् इच्छामि । कृपया प्रतिददातु'' इति चम्पकम् अवदत् सः ।

चम्पकः निराकरणं प्रदर्शितवान् ।

तदा अमीरचन्दः अवदत् - ''यदि एषा भूमिः मह्यं दीयेत तर्हि अहं द्विगुणितं मूल्यं दास्यामि'' इति ।

चम्पकः एतत् अपि अनङ्गीकुर्वन् उक्तवान् - ''एतादृशी उत्तमा भूमिः किमर्थं विक्रेतव्या मया ? लाभांशः इदमिदानीं प्राप्यमाणः अस्ति इतः । इदानीम् एव एतस्याः विक्रयणस्य न कापि आवश्यकता'' इति ।

''द्विगुणितं मूल्यं दत्त्वा ग्रामे एकां कृषियोग्यां भूमिं दास्यामि । कृपया एतां मह्यं ददातु'' इति प्रार्थितवान् अमीरचन्दः ।



चम्पकः अनिच्छन् इव व्यवहरन् एतं प्रस्तावम् अङ्गीकृतवान् । धनिकतः प्रभूतं धनं, कृषियोग्यभूमेः स्वामित्वं च प्राप्य महता आनन्देन स्वस्य गृहं गतवान् सः ।

'अहो, अहं वञ्चितः अभवम्' इति अल्पे एव काले ज्ञातवान् अमीरचन्दः ।

किन्तु किं वा कर्तुं शक्नुयात् सः ? तेन यादृशं कुतन्त्रं कृतं तादृशम् एव कृतवान् आसीत् चम्पकः । कुतन्त्रपुरस्सरं ग्रामे जनानां यत् वञ्चनं क्रियते स्म तत् पूर्णतः परित्यक्तवान् अमीरचन्दः एतदनन्तरम् ।





# मृदुलायाः साहसयात्रा




पि. कार्तिकेयः
विजयवाडा


मृदुला नाम शशशिशुः मात्रा सह बिले वसति स्म । एकदा मृदुला ऐच्छत् यत् अरण्ये सञ्चारः करणीयः इति । तदा माता तां बोधितवती – "अरण्ये एकाकितया न सञ्चरणीयं भवत्या । भवती अल्पवयस्का । महाप्राणिनः भवतीं खादेयुः अपि" इति । किन्तु मृदुला एतत् न अङ्गीकृतवती ।

अनन्तरदिने सा एकाकिनी गृहात् प्रस्थितवती वनविहाराय । अल्पे एव काले तया कश्चन अश्रुतपूर्वः शब्दः श्रुतः । कश्चन भल्लूकः तदभिमुखम् आगच्छन् आसीत् । एतत् दृष्ट्वा सा भीता । तावता वृक्षस्य काचित् शाखा तस्याः पादयोः पुरतः पतिता । मृदुला ताम् उन्नीय भल्लूकं लक्ष्यीकृत्य अक्षिपत् । शाखया ताडितः भल्लूकः यावत् इतस्ततः अपश्यत् तावता ततः दूरं धावितवती मृदुला ।

ततः अग्रे गता सा एकस्य गुल्मस्य अधः किञ्चित्कालम् उपविष्टवती । विश्रान्त्यनन्तरं सा मन्दम् उत्थाय गृहं प्रति गन्तुम् उद्युक्ता । तावता कश्चन शृगालः तम् अपश्यत् । तां ग्रहीतुम् इच्छन् सः तस्याः समीपम् आगतः । तं दृष्ट्वा नितरां भीता मृदुला ततः धावनम् आरब्धवती ।

एवं धावनसमये तया कश्चन मधुमक्षिकाकोषः दृष्टः । तस्य दर्शनात् तस्याः मनसि कश्चन उपायः स्फुरितः । सा एकं शिलाखण्डं स्वीकृत्य मधुकोषं लक्ष्यीकृत्य क्षिप्त्वा ततः धावितवती । शिलाप्रहारतः कुपिताः मधुमक्षिकाः कोषतः बहिः आगताः । एषः शृगालः एव अस्माकं कोषं प्रति पाषाणं क्षिप्त्वा इदानीं मौनेन तिष्ठति इति ताः अचिन्तयन् । अतः ताः तम् आवृत्य दष्टवत्यः ।

अग्रे गता मृदुला कस्यचित् वृक्षस्य अधः







बैशाखीपाला
२४ परगणाः
(उत्तरम्)



शयनं कृतवती । यदा सा जागरिता तदा स्वस्य पुरतः स्थिताः केचन गृञ्जनकाः तया दृष्टाः । सा बुभुक्षिता आसीत् । प्रातःकालतः किमपि न खादितम् आसीत् तया । अतः सा गृञ्जनकानां भक्षणे मग्ना जाता । खादनसमये तया भावना प्राप्ता यत् मम पार्श्वे कोऽपि स्थितिः अस्ति इति । सा परिवृत्य दृष्टवती । तत्र तया कश्चन गजपुत्रः दृष्टः । गजपुत्रस्य दर्शनात् भीता सा पलायनाय उद्युक्ता । तदा गजपुत्रः गाम्भीर्येण अवदत् – ''भोः, अलं पलायनेन । अहं भवत्याः मित्रम् । अहं भवतीं गृहं प्रापयिष्यामि'' इति ।

सन्तुष्टा मृदुला गजम् आरुह्य उपविष्टवती । गजपुत्रः तां गृहं प्रापितवान् । पुत्रीं सकुशलम् आगतां दृष्ट्वा माता सन्तुष्टा । सा मृदुला च गजपुत्राय धन्यवादं समर्पितवत्यौ । अरण्ये प्रवृत्तं सर्वं मातरं निवेदितवती मृदुला । तदा माता अवदत् – ''एतदवसरे दैवात् भवती रक्षिता । सर्वदा एवं न भवति'' इति । तदा मृदुला अवदत् – ''मातः, इतः परं भवती यथा वदति तथा करिष्यामि । यावत् प्रौढता न प्राप्यते तावत् एकाकिनी अरण्य-सञ्चाराय न गमिष्यामि'' इति । ततः सा मातुः अङ्के शिरः निधाय निद्रितवती ।



## च्यवनः

भारतीये पुराणसाहित्ये उल्लिख्यमानेषु नायकेषु वयसा कनिष्ठतमः प्रायः च्यवनः एव ।

पुलोमा तस्य माता । सा भृगुमहर्षेः पुत्री । कदाचित् कश्चन चोरः ताम् अपहर्तुं प्रयत्नं कृतवान् । तस्याः रक्षणाय तत्परिसरे कोऽपि न आसीत् । च्यवनः इतोऽपि मातुः गर्भे एव आसीत् । सः राक्षसः सगर्वम् अवदत् – ''भोः, एतत्परिसरे कोऽपि नास्ति भवतीं रक्षितुम् । भवती इदानीं मदधीना स्यात् एव'' इति ।

तदा कश्चन प्रकाशः स्फुरितः । सः प्रकाशः राक्षसं किञ्चित्कालं दर्शनासमर्थम् अकरोत् । पुनः यदा राक्षसः नेत्रे उन्मीलितवान् तदा तस्य पुरतः कश्चन बालकः स्थितः आसीत् । सः बालकः एव च्यवनः । राक्षसस्य संहाराय सः मातुः गर्भतः निर्गतवान् आसीत् । सः स्वमुष्टिभिः राक्षसं प्रहृत्य भूमौ अपातयत् । तस्मात् राक्षसः मृतः जातः ।





# अन्तरिक्षे रोमाञ्चकः मासात्मकः वासः




पि. कार्तिक
रामस्वामी
चेन्नै


सः सामान्यः प्रभातकालः । सर्वम् अपि सामान्यम् इव भासते स्म । किन्तु मम तु तत् विशेषदिनम् । यतः अन्तरिक्षप्रयाणाय मया नासा- अन्तरिक्षकेन्द्रं प्रति गन्तव्यम् आसीत् । अहं शीघ्रम् एव तत्र उपस्थितः ।



मम प्रयाणं मातुलेन सह । सः अनुभवी गगनयात्रिकः । सः अन्तरिक्षविषये, अन्तरिक्षयानविषये च सर्वं जानाति स्म । आवाम् 'अन्तरिक्षराज्ञी'नामकम् अन्तरिक्षयानम् आरूढवन्तौ । अहं कुतूहलेन सर्वं दृष्टवान् । यानस्य नियन्त्रणभागं दृष्ट्वा अहम् आश्चर्येण स्तब्धः ।

मम मातुलः किञ्चित्कालं यावत् अधिकारिभिः सह चर्चां कृतवान् । ततः ते निर्गताः । अनन्तरम् आवां निर्गमनाय सिद्धौ जातौ । क्षणगणना आरब्धा । मम तु उद्वेगः । क्षणगणना यदा समाप्ता तदा अस्माकं यानम् अन्तरिक्षं प्रति उड्डयनम् अकरोत् ।



अचिरात् एव आवां भूपरिसरम् अपि अतिक्रम्य गतौ । अस्माकम् अन्तरिक्षयानस्य वातायने दृढतराणि काचकानि योजितानि आसन् । तद्द्वारा अहं सूर्यं चन्द्रं च स्पष्टतया द्रष्टुं शक्नोमि स्म । स्फुरन्ति बहूनि नक्षत्राणि अपि मया दृष्टानि ।

अहं मम घटीं दृष्टवान् । ग्रीनूविच्समयानुगुणं तदा सायङ्कालस्य ६-३० आसीत् । समयः मन्दम् अतिक्रामति स्म । मातुलः आपत्काले अन्तरिक्षयाने किं किं करणीयम् इत्यादिकं सर्वं मह्यं दर्शितवान् ।

अल्पे एव काले मया बुभुक्षा अनुभूता । मातुलः अपि बुभुक्षितः आसीत् । अतः मातुलः आहारबन्धान् उद्घाटितवान् । तत्र विविधानि खाद्यानि आसन् । अल्पे एव काले मम आहारसेवनं समाप्तम् ।

तदनन्तरं मया तन्द्रा प्राप्ता । अहं शयनं कृतवान् । किन्तु मया झटिति निद्रा न प्राप्ता । अन्तरिक्षयात्राविषयकः उद्वेगः माम् इतोऽपि पीडयति स्म । श्वः किं किं करणीयम् इति अहं चिन्तयन् नेत्रे निमीलितवान् । ततः मया कदा निद्रा प्राप्ता इति न ज्ञातम् ।

भूमिसमयानुगुणम् अनन्तरदिनस्य प्रातःकाले मया जागरणं प्राप्तम् । मया घटी दृष्टा । तदा सार्धपञ्चवादनम्(५-३०) आसीत् । मम मातुलः तावता एव उत्थाय भूकेन्द्रस्य सम्पर्काय प्रयतमानः आसीत् ।

आवाम् अल्पाहारं समाप्य किञ्चित्कालं जल्पनं कृतवन्तौ । 'अस्माभिः यत्र मासं यावत् वासः क्रियते तत् अन्ताराष्ट्रियान्तरिक्षकेन्द्रं प्राप्तुं षड्दिनात्मकं प्रयाणं करणीयम्' इति मातुलः माम् उक्तवान् ।

पञ्च दिनानि अतीतानि । षष्ठे दिने प्रातः मातुलः माम् उक्तवान् - 'केषाञ्चित् एव क्षणानाम् अनन्तरम् आवाम् अन्ताराष्ट्रियम् अन्तरिक्षकेन्द्रं प्राप्स्यामः' इति । मम कुतूहलं प्रवृद्धम् ।

अचिरात् एव आवां तत् केन्द्रं प्राप्तवन्तौ । गगननौका गगननौकास्थानके अवातरत् । मम आश्चर्यम् अवर्धत । तत् तु एकं गृहम् इव आसीत् । सर्वविधसाधनैः सुसज्जम् आसीत् तत् । दूरदर्शनं, सङ्गणकम्, आसनानि इत्यादीनि सर्वाणि आसन् तत्र ।

मम मातुलः गतेषु षट्सु दिनेषु एकाकितया गगननौकां चालितवान् इत्यतः नितरां श्रान्तः आसीत् सः । अतः सः शयनार्थं गतवान् । अहं दूरदर्शनं पश्यन् उपविष्टवान् । किञ्चित्कालानन्तरं मया बहिः कोऽपि शब्दः श्रुतः । आदौ मया तद्विषये उपेक्षा दर्शिता । किन्तु सः शब्दः यदा तीव्रः जातः तदा अहं गगनयात्रावेषं धृत्वा गगनयात्रोपनेत्रम् अपि धृतवान् । तत् उपनेत्रम् अन्तरिक्षवस्तूनाम् अभिज्ञाने उपकरोति स्म । किं प्रवर्तते इति ज्ञातुमहं प्रकोष्ठात् बहिः गतः ।

तत्र काचित् उल्का दृष्टा । अन्धकारे अपि सा मया स्पष्टतया अभिज्ञाता । सा क्षणे क्षणे अस्माकम् अन्तरिक्षकेन्द्रस्य समीपम् आगच्छन्ती दृष्टा मया । अतः मया भीतिः प्राप्ता । अहं झटिति अन्तः गत्वा मातुलम् उत्थाप्य मया दृष्टं सर्वं निवेदितवान् ।

आदौ सः अपि क्षणकालं दिग्भ्रान्तः । ततः सः दूरवीक्षक-सदृशम् एकं साधनं गृहीत्वा बहिः दृष्टवान् । मया सूचितायां दिशि क्षणकालं दृष्टं तेन । ततः तस्य मुखे मन्दहासः दृष्टः । मया किमपि न ज्ञातम् । किमर्थम् एषः मन्दहासं प्रकटयति ? किम् उल्का अस्मत्केन्द्रसमीपम् आगच्छन्ती न आसीत् ?



मया तस्य मन्दहासस्य कारणं पृष्टम् । सः उक्तवान् यत् उल्का अस्मत्केन्द्रतः दूरं गच्छन्ती अस्ति इति । दूरवीक्षकसदृशस्य साधनस्य समीपं माम् आहूय सः अवदत् - ''भवान् स्वयं पश्यतु किं प्रवर्तते इति'' इति । मया परिशीलितम् । सत्यं, सा उल्का अस्मत्तः दूरं गच्छन्ती अस्ति ! मम उद्वेगः अपगतः ।

त्रयः सप्ताहाः अतीताः । तदवसरे विशेषघटना कापि न घटिता ।





अन्तरिक्षकेन्द्रस्य त्यागस्य क्षणः अपि सन्निहितः । एतत् केन्द्रं त्यक्तव्यम् इति विचारः एव मयि खेदम् अजनयत् । तथापि निर्गमनं तु अपरिहार्यम् एव खलु ? अहं नेत्राभ्याम् एव सर्ववस्तूनि उद्दिश्य आप्रच्छनम् उक्त्वा प्रतिगमनयात्रायां भागम् अवहम् ।

क्रमेण तत् अन्ताराष्ट्रियम् अन्तरिक्षकेन्द्रम् अपि दृष्टिपथात् अपगतम् । आवाम् उभावपि निद्रां कृतवन्तौ । एवम् एव षट् दिनानि अपि अतीतानि ।



अन्तिमे दिने आवां विलम्बेन उत्थितवन्तौ । यदा आवयोः अल्पाहारः समाप्तः तावता यन्त्रगृहतः आगच्छन् धूम-गन्धः आघ्रातः । किमपि दग्धं जायमानम् अस्ति इति विचिन्त्य आवां यन्त्रगृहं प्रति वेगेन धावितवन्तौ ।



तत्र यत् दृष्टं तत् नितराम् आघातकरम् आसीत् । मुख्यः नियन्त्रक-पिञ्जः एव दग्धः जायमानः आसीत् । एतत् कथं प्रवृत्तम् इति आवाभ्यां न अवगतम् । तदा भूकेन्द्रतः वार्ता आगता यत् लघुः उल्का काचित् गगननौकया घट्टिता जाता अस्ति, अतः एव अग्निः उत्पन्नः स्यात् इति । भूकेन्द्रजनाः ज्ञापितवन्तः यत् एषः अग्निः समग्रां गगननौकाम् एव दहेत् अपि इति ।

आवां चिन्ताक्रान्तौ जातौ । मातुलः उक्तवान् यत् भूकेन्द्रं प्राप्तुं सार्ध-घण्टाद्वयात्मकः कालः आवश्यकः इति । तदभ्यन्तरे गगननौका सम्पूर्ण-तया दग्धा न भवेत् इत्यत्र कः विश्वासः ?



अग्निशामकोपकरणेन अग्निं शमयितुम् आवां प्रयत्नं कृतवन्तौ । किन्तु स च प्रयत्नः फलकारी न जातः । आवाम् अन्यान् उपायान् आश्रित्य अपि प्रयासं कृतवन्तौ । ते अपि विफलाः । अग्नेः तीव्रता प्रवृद्धा । सः वेगेन अस्माकं यानस्य दाहं कुर्वन् आसीत् ।

तावता मम मनसि कश्चन उपायः स्फुरितः । अहं तं मातुलम् उक्तवान् । एषः फलकारी भवेत् इति विचिन्त्य हृष्टः अभवत् मातुलः । सः झटिति गगननौकां परमवेगेन चालयितुम् उद्युक्तः जातः । भूमिं प्राप्तुम् इतोऽपि अर्धघण्टा यदा अवशिष्टा तदा अग्निः अस्माकं गगननौकायाः बाह्या-वरणस्य भूयांसं भागं दग्धवान् । अतः अन्तः अधिकम् औष्ण्यम् अनु-भूयते स्म । यानस्य वेगाधिक्यकारणतः आवां निश्चितसमयात् पूर्वम् एव भूपरिसरं प्रविष्टवन्तौ । तत्समनन्तरम् एव आवाम् आपच्छत्रं प्रसार्य गगननौकातः उत्कूर्दितवन्तौ ।

गगननौका दग्धा सती फेसिफिक्महासागरे अपतत् । तावता आवां ततः दूरं गतौ आस्व । सोमवासरे आवां भूमिं प्राप्तवन्तौ । आवां न्यूयार्क्नगरं प्रति प्रेषितौ प्रथमोपचारानन्तरम् ।

तदनन्तरम् आवां नासां प्राप्तवन्तौ । मातुलेन अधिकारिणां पुरतः सर्वं निवेदितम् । वेग-वर्धनरूपः उपायः सूचितः यत् तदर्थं सर्वे अधिकारिणः मां प्रशंसितवन्तः । समय-स्फूर्तेः निमित्तं मह्यं प्रशस्तिः दत्ता ।



# वार्ताविषयतां गता: बाला:

## आत्मना लिखिता कथा स्वस्यैव पाठ्यपुस्तके !!



केरलराज्ये जातयोः दम्पत्योः अपत्यं मेथ्यू त्रयोदश-वर्षीयः । सः रोमनगरे पठति । तस्य पिता भारतीयम् उपाहारगृहं सञ्चालयति । माता च आयुर्वेदचिकित्सिका । मेथ्यूबालकस्य सप्तमकक्ष्यायाः पौरशास्त्रपाठ्यपुस्तके 'दि स्टोरी आफ् मेथ्यू'नामकः पाठः अस्ति । स च पाठः चतुर्थकक्ष्यायां स्थितेन तेनैव बालपत्रिकायै लिखितः आसीत् । ततः उद्धृत्य सप्तमकक्ष्यापाठ्यपुस्तके योजितः आसीत् सः पाठ्यपुस्तकसमित्या । मेथ्यू इटालियन्भाषया लिखितवान् आसीत् । सः आंग्ल-फ्रेञ्च-ल्याटिन्-स्पानिष्भाषाः जानाति । इदानीं ग्रीक्भाषायाः अध्ययनम् अपि कुर्वन्नस्ति सः । स्वस्य मातृभाषया मलयाळभाषया सः वक्तुं समर्थः, किन्तु न लेखितुं पठितुं वा । न केवलं सहपाठिनः, अपि तु इटलीयाः पादकन्दुकपटवः बटिस्टुटाप्रभृतयः अपि तस्य मित्राणि । यतः ते तस्य पितुः डा॰ थामस्वर्यस्य उपाहारगृहं प्रति आगच्छन्तः भवन्ति पौनःपुन्येन ।

## तन्त्रज्ञानप्रवीणा बाला




इंग्लेण्ड्देशस्य मिड्स्टन्नगरस्य निवासिनी षड्वर्षीया गीता थनिनाथन् जि. सि. एस्. ई. परीक्षाम् उत्तीर्णा अस्ति । सा परीक्षा माध्यमिक-विद्यालयपरीक्षासमाना । तस्याः विशेषाध्ययन-विषयः आसीत् 'इन्फर्मेषन् टेक्नालजी' । तस्याः परीक्षायाः सम्मुखीकरणात् पूर्वं सा समीपस्थे वट्फर्ड्नगरे स्थिते महाविद्यालये प्रतिभानुवासरं घण्टाचतुष्टयं यावत् नैरन्तर्येण अध्ययनं कृतवती नव मासान् यावत् । तमिळुनाडुराज्ये जातः तस्याः पिता कन्दस्वामी वदति यत् यदा सा द्विवर्षीया आसीत् तदा एव सङ्गणकस्य उपयोगे आसक्ति-दर्शितवती, सङ्गणकोपयोगे कस्य प्राथम्यं स्यादिति गृहे बहुवारम् आवयोः कलहः भवति स्म इति ।

# भारतम् अवगम्यताम्

नवम्बर्मासे १४ दिनाङ्के भारतस्य प्रथमप्रधानमन्त्रिणः जवहरलालनेहरूवर्यस्य, १९ दिनाङ्के प्रथमप्रधानमन्त्रिण्याः श्रीमत्याः इन्दिरागान्धिवर्यायाः च जन्मदिनं भविष्यति । अतः एतस्य मासस्य प्रश्नाः तयोः व्यक्तित्वं, शासनं, सिद्धीः च अवलम्ब्य सन्ति ।

१. नेहरूवर्येण बालानां निमित्तं लिखितस्य पुस्तकस्य नाम किम् ?

२. 'बहुभ्यः वर्षेभ्यः पूर्वं वयं भविष्येण सह सन्धिं कृतवन्तः आस्म, तदनुगुणं व्यवहाराय कालः सम्प्राप्तः अस्ति' - इत्येतत् नेहरूवर्यस्य भाषणात् उद्धृतं वाक्यम् । तत् भाषणं कदा कुत्र कृतम् ? किन्निमित्तं च कृतम् ?

३. नेहरूवर्यस्य उभे सहोदर्यौ आस्ताम् । एका 'भारते ऐदम्प्राथम्येन मन्त्रित्वं प्राप्तवती महिला' इति ख्यातिं प्राप्तवती । सा का ? कस्मिन् राज्ये सा मन्त्रिणी आसीत् ?

४. यदा भारतं स्वतन्त्रं जायमानम् आसीत् तदा जवहरलालनेहरूवर्यः भारतीयराष्ट्रियकाङ्ग्रेस्-संस्थायाः अध्यक्षः आसीत् इत्येतत् सत्यम् उत मिथ्या ?

५. इन्दिरागान्धिवर्या स्वबाल्ये तरुणानां कस्यचित् गणस्य नायकत्वं वहति स्म, यश्च गणः स्वातन्त्र्यसङ्ग्रामे साहाय्यम् आचरति स्म । तस्य गणस्य नाम किम् आसीत् ? गणस्य प्रमुखं कार्यं च किम् आसीत् ?

६. इन्दिरावर्या १९७१ तमे जनप्रियतायाः उत्तुङ्गशिखरे आसीत् । एषा जनप्रियता कस्मात् प्राप्ता ?

*(उत्तराणि अग्रिमे मासे)*

### 'अक्टोबर्'मासस्य प्रश्नानाम् उत्तराणि

१. मैसूरुनगरम् । दशदिनात्मकस्य एतस्य उत्सवस्य अन्ते शोभायात्रा भवति । महाराजः गजस्य उपरि स्थापिते वरण्डे उपविश्य सकलराजगौरवेण तत्र भागं वहति ।

२. पुर्याम् । (ओरिस्साराज्ये) जगन्नाथः, बलभद्रः, सुभद्रा च यदा शोभायात्रया गच्छन्ति तदा एवं करणीयम् । एतां रथयात्रां द्रष्टुम् आगतानां जनानां महान् सम्मर्दः भवति तत्र ।

३. मकरसङ्क्रमणोत्सवः । जनवरीमासे आचर्यते एषः । गुजराते एतद्दिने वाताटोड्डायनं क्रियते । तमिळुनाडुराज्ये च पोङ्गल् सज्जीक्रियते ।

४. इद् उल् झुला ।

५. खोरदाद साल् ।

६. चैत्रै-उत्सवदिने भगवतः सुन्दरेश्वरस्य देव्याः मीनाक्ष्याः च विवाहमङ्गलोत्सवः प्रचलति ।

७. मैलापुरस्थः कपालीश्वरदेवालयः । कपालीश्वरः इत्येतत् शिवस्य पर्याय-नाम ।

८. शिमोगानाम्ना ।



# विघ्नेश्वरः

एकदा लक्ष्मीः मानससरोवरे स्नानं कुर्वती आसीत् । तदा पार्वती विष्णुवेषेण तत्र गतवती । मनोहरं नारायणरूपं दृष्ट्वा लक्ष्मीः अनुरागदृष्ट्या तम् अपश्यत् । नारायण-रूपधारिणी पार्वती अपि लक्ष्म्याः परमसुन्दरं रूपं दृष्ट्वा हृतहृदया जाता । तयोः दृष्ट्योः योगात् सरोवरे एकं स्वर्णकमलम् उत्पन्नम् । कमलनालस्य अग्रे एका कलिका अपि आसीत् । लक्ष्मीः नारायणरूपिणीं पार्वतीम् दृढम् आलिङ्गितवती ।

तदा पार्वती उच्चैः हसन्ती उक्तवती – ''अहं न नारायणः, अपि तु पार्वती अस्मि'' इति ।

एतावत् उक्त्वा निजरूपेण स्थित्वा सा पुनः उक्तवती – ''पूर्वं विष्णुः मोहिनीरूपं प्राप्य शिवं मायाजाले पातितवान् आसीत् । तस्य प्रतीकाररूपेण मया अद्य एवं कृतम्'' इति ।

सुवर्णकमलस्य मध्ये एका सुन्दरी बालिका अपि आसीत् । तां दृष्ट्वा लक्ष्मीः पार्वती च आनन्दतुन्दिले जाते । ते तां वात्सल्येन उन्नीतवत्यौ ।

तदा विघ्नेश्वरः तत्र आगत्य अवदत् – ''पार्वती जयस्वरूपिणी । लक्ष्मीः च सम्पत्स्वरूपिणी । उभयोः अंशेन जाता एषा 'जयश्रीः' इति नाम प्राप्नोतु । एतस्याः भावी पतिः अपि शिवकेशवयोः अंशेन जातः अस्ति'' इति ।

एतावत् उक्त्वा सः वायुदेवम् आदिष्टवान् यत् कमलसहिताम् एतां बालिकां कावेरीनद्यां प्रवाह्य आगच्छतु इति । वायुदेवः तां बालिकां कावेर्यां प्रवाहितवान् ।



एतां बालिकां नद्यां दृष्ट्वा दक्षिणदेशस्य चक्रवर्ती महता सन्तोषेण स्वगृहं नीतवान् ।

यदा तस्याः नामकरणोत्सवः करणीयम् इति निश्चितं तदा आकाशवाणी काचित् श्रुता - ''एतस्याः बालिकायाः नाम जयश्रीः इति भवतु'' इति ।

जयश्रीः शुक्लपक्षस्य चन्द्रः इव प्रवृद्धा । यदा सा प्राप्तवयस्का जाता तदा तस्याः असदृशं सौन्दर्यं त्रिषु अपि लोकेषु प्रसिद्धं जातम् । तस्याः साहसम् अपि लोकविख्यातं जातम् ।

सा दिनस्य अधिककालं प्राकृतिकपरिसरे, तन्नाम अरण्यादिषु सञ्चरति स्म ।

हरिहरयोः अंशेन जातः स्वामी कदाचित् विघ्नेश्वरकुमारस्वामिनोः मेलनार्थं कैलासम् आगतवान् । विघ्नेश्वरः कुमारस्वामी च वार्तालापसमये कदाचित् उक्तवन्तौ - ''लक्ष्मीपार्वत्योः अंशात् मानससरोवरे जाता जयश्रीः एव स्वामिनः भाविपत्नी'' इति ।

तस्याः विषये अधिकं विवरणं प्राप्तव्यम् इति स्वामिनः मनसि प्रबला इच्छा जाता । तथापि सः आत्मनियन्त्रणं कृत्वा मौनेन स्थितवान् ।

कैलासे कानिचन दिनानि स्थित्वा यदा सः प्रस्थितवान् तदा विघ्नेश्वरः तम् अवदत् - ''भवान् आवयोः अपेक्षया अपि वयसा ज्येष्ठः । भवतः ब्रह्मचारित्वं न शोभते । अतः शीघ्रातिशीघ्रं भवान् विवाहे मतिं करोतु'' इति ।

एतदनन्तरं कुमारस्वामी विघ्नेश्वरः च आदरपूर्वकं तं प्रेषितवन्तौ । स्वामी स्वनिवासं प्रति प्रस्थितवान् ।

एकदा स्वामी अरण्ये विनोदविहारं कुर्वन् आसीत् । तदा केचन बाणाः चतसृषु दिक्षु आगत्य तम् अवरुद्धवन्तः । एतस्मात् क्रुद्धः सः तां दिशं दृष्टवान्, यतश्च बाणाः आगच्छन्ति स्म ।

तत्र दर्शनेन तस्य कोपः क्षणाभ्यन्तरे विलयं गतः । यतः धनुर्बाणसहिता जयश्रीः तत्र मन्दहासपूर्वकं स्थिता आसीत् । तस्याः दृष्टिः स्वामिनः हृदये लग्ना । ततः स्वामी अदृश्यः जातः ।

विघ्नेश्वरः जयश्रियः स्वप्ने प्रत्यक्षीभूय स्वामिनः विषयम् उक्तवान् आसीत् । तं स्वामिनम् अन्विष्यन्ती एव सा अरण्यम् आगतवती आसीत् ।

एतदनन्तरं नारदमुनेः आदेशस्य अनुगुणं

चक्रवर्ती जयश्रियाः स्वयंवरस्य व्यवस्थां कृतवान् । इन्द्रादयः देवाः वेषपरिवर्तनं कृत्वा राजवेषेण तत्र उपस्थिताः आसन् । किन्तु स्वामी सामान्यशबरयुवकरूपेण धनुर्बाणादीन् धृत्वा केनचित् कृष्णवर्णीयेन शुनकेन सह तत्र गतवान् ।

राजानः शबरयुवकस्य तस्य शुनकस्य च उपहासं कृतवन्तः । राज्ञां पङ्क्तौ उपवेशनाय तस्मै अवकाशः न दत्तः । एतस्मात् क्रुद्धः स्वामी सिंहद्वारसमीपं गत्वा शुनकस्य उपरि उपविश्य सकृत् वीरगर्जनं कृतवान् । तत्समनन्तरम् एव शुनकः सिंहरूपेण परिवृत्तः जातः ।

तदा जयश्रीः स्वामिनम् अभिज्ञाय तस्य कण्ठे मालाम् अर्पितवती । स्वामी तां सिंहस्य उपरि उपवेश्य ततः प्रस्थितः । तदा क्रुद्धाः राजानः तं ग्रहीतुम् उद्युक्ताः । स्वामी धैर्येण तान् सम्मुखीकृतवान् ।

स्वामिनः बाणप्रहारान् प्राप्य देवाः अपि भीताः । ते स्वस्य वास्तविकरूपेण तत्र तिष्ठन्तः स्वस्य दिव्यास्त्राणि प्रयोक्तुम् उद्युक्ताः जाताः । इन्द्रस्य वज्रायुधम् अपि अकिञ्चित्करं जातम् । अन्ते स्वामी अपि स्वस्य नैजरूपेण तत्र स्थितवान् । तं दृष्ट्वा सर्वे देवाः करौ योजयित्वा उक्तवन्तः - ''देव ! शरणं गताः स्मः वयम्'' इति ।

एतदनन्तरं स्वामि-जयश्रियोः विवाहः देवानां सम्मुखे महता वैभवेन सम्पन्नः । सर्वे वधूवरौ आशीर्वादेन अनुगृह्य स्ववसतिं प्रति गताः ।

त्रेतायुगे आर्यावर्ते कोसल-केकय-वसुमित्र-



नामकाः त्रयः राजानः महत्या मैत्र्या जीवन्ति स्म । कोसलस्य कौसल्यानामिका पुत्री आसीत् । एवमेव केकयस्य कैकेयीनामिका, वसुमित्रस्य सुमित्रानामिका च पुत्री आस्ताम् । कदाचित् त्रयाणाम् अपि राज्ञां मनसि युगपत् एव विचारः आगतः यत् अयोध्याधिपतये दशरथाय स्वपुत्री दातव्या इति ।

दशरथः तेषां निर्णयं सहर्षम् अङ्गीकृतवान् । एतदनन्तरं त्रयः अपि राजानः जैमिनिमुनिद्वारा पुत्रीणां विवाहस्य मुहूर्तं निश्चितवन्तः ।

जैमिनिमुनिः अवदत् - ''मया तादृशः मुहूर्तः निश्चितः अस्ति यत् तस्मिन् मुहूर्ते विघ्नेश्वरसाक्षितया तिसृणां कन्यकानां विवाहः दशरथेन सह भविष्यति । किन्तु विवाहात् पूर्वम् एताः तिस्रः अपि राक्षसपीडाम् अनुभवितुम् अर्हन्ति । अतः एतासां रक्षणाय



विशेषावधानदानं वरम्'' इति ।

तदनन्तरं त्रयः अपि राजानः सम्भूय समालोच्य ताः कन्यकाः महत्यां पेटिकायां सुरक्षिततया स्थापितवन्तः ।

नारदः रावणासुरसमीपं गत्वा उक्तवान् – ''हे लङ्केश्वर ! दशरथस्य विवाहः अचिरात् सम्पन्नः भविष्यति । तस्य पुत्रः एव भवतः संहारं करिष्यति इति स्मर्यते खलु भवता'' इति ।

एतत् श्रुत्वा क्रुद्धः रावणः ताः राजकुमारीः अपहर्तुं महोदरनामकं राक्षसं प्रेषितवान् । महोदरः ज्ञातवान् यत् ताः कन्यकाः महापेटिकायां स्थापिताः सन्ति इति । सः तां पेटिकाम् एव निगीर्णवान् । यदा सः आकाशमार्गेण प्रतिगच्छन् आसीत् तदा तस्य उदरे महती वेदना उत्पन्ना । तदा सः तां पेटिकाम् उद्वान्तवान् । पेटिका समुद्रे पतिता सती तरङ्गैः नीता ।

तस्मिन् काले दशरथः महतीं नौकाम् आरुह्य अयोध्यां प्रत्यागच्छन् आसीत् । तस्य प्रत्यागमने कथमपि विलम्बः जातः आसीत् । निश्चितमुहूर्तात् पूर्वम् अहम् अयोध्यां प्राप्तुं शक्नुयाम् उत न इति सः नितरां चिन्ताकुलः आसीत् ।

एतदवसरे एव तरङ्गैः नीयमाना महापेटिका तेन दृष्टा । पेटिकानौकयोः घट्टनं जातम् । तस्मात् पेटिकायाः आवरणम् अपगतम् । तत्र तेन तिस्रः राजकुमार्यः दृष्टाः । दशरथः रज्जुसाहाय्येन पेटिकाम् आकृष्य ताः नौकां प्रति आनायितवान् । तासां दर्शनेन तेन ज्ञातं यत् याः परिणेतव्याः आसन् ताः एव एताः इति ।

तदा एव जैमिनिमुनिना निश्चितः मुहूर्तः सम्प्राप्तः । विघ्नेश्वरः तत्र प्रत्यक्षः जातः । तस्य सन्निधौ दशरथराजकुमारीणां विवाहः सम्पन्नः । विवाहानन्तरं विघ्नेश्वरः अदृश्यतां गतः । दशरथः तिसृभिः पत्नीभिः सह अयोध्याम् आगतवान् ।

मासाः गताः । दशरथस्य चत्वारः पुत्राः जाताः । ज्येष्ठः पुत्रः श्रीरामचन्द्रः कैकेयी-मातुः अपेक्षायाः अनुगुणं पत्न्या सीतया, अनुजेन लक्ष्मणेन च सह वनवासार्थं गतवान् । वने वसन्तीं सीतां रावणः अपहृतवान् । रामः लङ्काम् आक्रम्य रावणं संहृतवान् । ततः सीतया सह सः पुष्पकविमानम् आरुह्य लङ्कातः प्रस्थितवान् । सः सेतुयुक्ते समुद्रतटे शिवस्य सम्पूजनं कर्तुम् इच्छति स्म । अतः सः सर्वैः सह रामेश्वरं गतवान् ।

शिवलिङ्गस्य प्रतिष्ठापनार्थं रामचन्द्रः हनुमन्तं कैलासं प्रति प्रेषितवान् । हनुमान् मनोवेगेन गच्छन् कैलासं प्राप्तवान् । तत्र स्थितेषु बृहत् लिङ्गम् उत्पाट्य नेतुं सः प्रयत्नं कृतवान् । किन्तु साफल्यं न प्राप्तम् । सः तत्रत्यं लघुतमं लिङ्गम् अपि कम्पयितुं न शक्तः ।

तावता कश्चन बालकः तत्र उपस्थाय अवदत् - ''कः भवान् ? दर्शनात् भासते यत् भवान् हनुमान् स्यात् इति । किन्तु भवतः सामर्थ्यस्य दर्शनात् भासते यत् भवान् हनुमान् न स्यात् इति । वस्तुतः कः भवान् ?'' इति ।

''अहम् एव हनुमान् । शिवलिङ्गस्य आनयनाय श्रीरामः माम् अत्र प्रेषितवान् । माम् एवं पृच्छन् भवान् कः ?'' इति अपृच्छत् हनुमान् ।

''अत्रत्यानि शिवलिङ्गानि कोऽपि यथा न नयेत् तथा रक्षणाय शिवेन नियुक्तः अस्मि अहम् । हनुमान् पञ्चमुखी इति मया श्रुतम् । किन्तु भवतः पञ्च मुखानि न दृश्यन्ते खलु ?'' इति अवदत् बालकः ।

तदा हनुमान् गरुड-वराह-सिंह-अश्वमुखानि अपि धरन् पञ्चमुखित्वेन आकाशम् अपि अभिव्याप्य तिष्ठन् मन्दहासपूर्वकं तं बालकं अवदत् - ''विघ्नेश्वर ! विघ्नविनायक ! मया स्वस्य पञ्चमुखित्वं दर्शितम् । इदानीं भवता अपि स्वस्य पञ्चमुखित्वं दर्शनीयम् एव'' इति ।

एतत् श्रुत्वा विघ्नेश्वरः स्वस्य विश्वरूपं दर्शितवान् । हनुमान् पञ्चमुखिनं विघ्नेश्वरं प्रणम्य अवदत् - ''विघ्नेश्वर ! बालकरूपेण



भवान् मत्समीपं यदा आगतः तदा एव मया अवगतं यत् भवान् विघ्नेश्वरः एव इति । शिवलिङ्गस्य नयनं भवान् एव निरोद्धुम् अर्हति, न अन्यः । कृपया मह्यम् एकं शिवलिङ्गं ददातु'' इति ।

तदा विघ्नेश्वरः हसन् - ''आञ्जनेय ! भवतः पञ्चमुखिरूपं द्रष्टव्यम् इति उद्देशेन मया एवं कृतम् । भवान् शिवस्य अंशेन उत्पन्नः अस्ति । एवं स्थिते शिवलिङ्गनयने को वा भवन्तं निरोद्धुं समर्थः ? तथापि भवान् मां प्रार्थितवान् इत्यतः विशिष्टं शिवलिङ्गं भवते दास्यामि'' इति उक्त्वा महत् ज्योतिर्लिङ्गं तस्मै दत्तवान् ।

हनूमान् शिवलिङ्गं प्राप्य आनन्देन प्रतिगतवान् । किन्तु तावता रामेण सङ्कल्पितः मुहूर्तः आसन्नः आसीत् । अतः सीतादेवी वालुकाभिः शिवलिङ्गं निर्माय प्रतिष्ठापितवती आसीत् । रामचन्द्रः जलेन तत् लिङ्गम् अभिषिच्य पूजाम् आरब्धवान् आसीत् । तावता आकाशमार्गेण आगतः हनूमान् तत्र उपस्थितः जातः ।

तत्र तेन रामेण क्रियमाणा सैकतलिङ्गपूजा दृष्टा । तस्मात् नितरां क्रुद्धः सः पुच्छेन तत् सैकतलिङ्गं प्रताड्य पातयितुं प्रयत्नं कृतवान् । तथापि तत् लिङ्गं तु अक्षतम् एव आसीत् । तेन नितरां क्रुद्धः हनूमान् पुच्छेन आवरय्य बलात् लिङ्गम् आकृष्टवान् । तेन पुच्छस्यैव वेदना जाता । लिङ्गं तु अकम्पितम् एव अतिष्ठत् ।

तदा श्रीरामः हनूमन्तं सान्त्वयन् अवदत् - ''आञ्जनेय ! भवान् सर्वज्ञः । एतत् लिङ्गं सैकतम् एव चेदपि तत्र शिवांशः तु अस्ति एव खलु ? शिवस्य सैकतत्वकल्पनं केन वा शक्यम् ? भवता आनीतं लिङ्गम् अपि अत्र स्थापयतु । तस्यापि पूजा भवतु नाम'' इति ।

एतत् श्रुत्वा शान्तभावं प्राप्तवान् आञ्जनेयः आत्मना आनीतं शिवलिङ्गं रामस्य हस्ते अर्पितवान्, सैकतलिङ्गं भक्त्या प्रणतवान् च ।

श्रीरामः सीतया सह उपविश्य तत् भक्त्या पूजितवान् । पूजां समाप्य सर्वैः सह पुष्पकविमानम् आरुह्य अयोध्यां प्रति प्रस्थितवान् सः ।





# योग्यौ वधूवरौ

प्राचीने काले प्रवृत्ता घटना एषा । श्यामपुरनामके ग्रामे गौतमो नाम कश्चन कृषिकः वसति स्म । तस्य एक एव पुत्रः । पुत्रः यदा प्रौढः जातः तदा तस्य विवाहोऽपि अभवत् । पुत्रस्य विवाहस्य अनन्तरं सार्धैकवर्षात् पूर्वं तस्य पौत्रः अपि जातः । अनेन गौतमः तस्य पत्नी च सन्तुष्टौ ।

पौत्रस्य जन्मनः मासानन्तरम् एकदा गौतमस्य पुत्रः स्नुषा च उडुपेन नदीं तरन्तौ आस्ताम् । तदा उडुपस्य न्यञ्चनेन उभौ अपि नद्यां निमज्जन्तौ मृतौ ।

अनया दुर्घटनया गौतमः तत्पत्नी च बहु दुःखितौ । तयोः जीवने निराशता व्याप्ता । ताभ्याम् आहारपानीयादिकं सर्वमपि त्यक्तम् ।

तदा प्रतिवेशिनः तौ समाश्वासयन्तः – ''गतं तु गतमेव । चिन्तनेन किमपि प्रयोजनं नास्ति । शिशुः पौत्रः अनाथः म भवेत् । तदर्थं भवद्भ्यां जीवनीयम् । पौत्रस्य पालनपोषणम् इतः परं भवतोः अधीनम्'' इति उक्तवन्तः ।

एतत् श्रुतवतोः तयोः मनसि चिन्तनम् आरब्धम् । 'प्रतिवेशिनां वचनं सत्यमेव' इति तौ अवगतवन्तौ । कतिपयदिनेषु गतेषु तौ पौत्रं नीलकण्ठमन्दिरं नीतवन्तौ । तत्र अर्चकस्य गङ्गाधरशास्त्रिणः सूचनानुगुणं पौत्रस्य 'शिवः' इति नाम कृतवन्तौ । अपि च पौत्रः शिवः कीर्तिमान् बुद्धिमान् च भवेत् इति भगवन्तं प्रार्थितवन्तौ ।

गच्छता कालेन शिवः तरुणः जातः । तस्य सौन्दर्यं बुद्धिमत्ता च सर्वैः प्रशंसार्हा आसीत् । सः अर्चकस्य गङ्गाधरशास्त्रिणः प्रीतिपात्रम् आसीत् । प्रायः प्रतिदिनं सः पितामहेन सह मन्दिरं गच्छति स्म । शिवेन सह वार्तालापेन शास्त्रिणः मनः प्रफुल्लं भवति स्म ।

कदाचित् सायं पितामहः पौत्रश्च मन्दिरम्



आगतौ । भगवतः दर्शनस्य अनन्तरं मण्डपे उपविष्टेन गङ्गाधरशास्त्रिणा सह वार्तालापे मग्नौ जातौ ।

वार्तालापसमये शास्त्री शिवं पृष्टवान् – ''शिव ! एषु दिनेषु भवतः पितामहः चिन्तामग्नः इति भासते । तस्य मुखे नीरसता दृश्यते । एतस्य कारणं किम् ?'' इति ।

एतत् श्रुत्वा शिवः हसन् उक्तवान् – ''पितामहस्य चिन्तायाः कारणम् अहमेव'' इति ।

''किमुक्तं भवता ? भवान् पितामहस्य चिन्तायाः कारणीभूतः ? एतत् कथं भवितुम् अर्हति ?'' इति साश्चर्यं पृष्टवान् गङ्गाधरशास्त्री ।

तदा गौतमः उक्तवान् – ''शास्त्रिवर्य ! मम सन्देहस्य परिहारः भवता एव वक्तव्यः । अहं शिवस्य विवाहं कर्तुम् इच्छामि, किन्तु एषः न अङ्गीकरोत्येव । अतः अद्य अहम् एतं तर्जितवान् । तथापि महिषस्योपरि वृष्टिरिव मम तर्जनं व्यर्थं जातम् । विवाहविषये अङ्गीकारः न सूचितः अनेन । अतः इदानीं तस्य वचनमपि श्रुत्वा भवान् एव निर्णयं वदतु'' इति ।

शास्त्री शिवं साकूतं दृष्टवान् । शिवः शिरः अवनमय्य उक्तवान् – ''पितामहेन काचित् कन्या दर्शिता । 'एषा भवता परिणेतव्या' इत्यपि उक्तम् । किन्तु मम अभिप्रायः अस्ति – 'सुन्दरी बुद्धिमती सती या गृहकार्यमपि जानाति तादृशी एव कन्या परिणेतव्या' इति । सौन्दर्यमात्रेण आकृष्टः अहं काञ्चित् परिणयामि चेत् सा पितामही-पितामहयोः रक्षणं न कुर्यात् अपि । अस्मिन् वयसि तयोः कष्टं दातुं नाहं सिद्धः । मम एतम् अभिप्रायं श्रुत्वा पितामहः कुपितः अस्ति'' इति ।

शिवस्य वचनम् अङ्गीकुर्वन् गङ्गाधरशास्त्री उक्तवान् – ''भवतः पौत्रः उचितम् एव उक्तवान् । तस्य अभिप्रायम् अहम् अपि अङ्गीकरोमि'' इति ।

गौतमः किमपि वक्तुम् उद्युक्तः । तावति काले चन्द्रनामकः तद्ग्रामीणः कश्चन कृषिकः तत्र आगतः । तेन सह सुन्दरी कन्या काचित् आगता । चन्द्रः शास्त्रिणं प्रणम्य पनसफलम् एकं तस्मै अर्पितवान् ।

शास्त्री तस्मै धन्यवादं समर्प्य पृष्टवान् – ''एषा का ?'' इति ।

''एषा मम श्यालस्य पुत्री । गौरी इति

अस्याः नाम । एषा नगरे निवसति । तथापि सर्वं कार्यं जानाति । यत्कार्यं कर्तुं मम पत्न्या एकघण्टा इष्यते तदेव कार्यम् अनया पञ्चदश-निमेषाभ्यन्तरे समाप्यते'' इति कन्यां प्रशंसन् चन्द्रः उक्तवान् ।

तदा एव पृष्ठतः स्थिता गौरी अग्रे आगत्य शास्त्रिणः पादयोः सविनयं नमस्कृतवती ।

'शीघ्रमेव कल्याणप्राप्तिः अस्तु' इति आशीर्वादेन तां तोषितवान् शास्त्री पार्श्वे स्थितस्य शिवस्य मुखं दृष्टवान् । शिवस्य मनः सम्पूर्णतया तस्यां संलग्नम् आसीत् ।

एतत् दृष्ट्वा शास्त्री चन्द्रम् उक्तवान् - ''भवतः कथनानुसारं एषा कन्या बुद्धिमती स्फूर्तिमती च अस्ति । भवान् एतं शिवं जानाति एव यत् एषः सुन्दरः बुद्धिमान् च इति । अतः मम मनः इदानीं अनयोः उभयोः मध्ये कस्य सामर्थ्यम् अधिकतरम् इति ज्ञातुम् इच्छति, यदि गौर्याः अस्मिन् विषये काऽपि आपत्तिः न स्यात् ...'' इति ।

गौरी शिरश्चालनेन एव 'कापि आपत्तिः नास्ति' इति भावं प्रकटितवती ।

तदा शास्त्री शिवम् उक्तवान् - ''यदिच्छति तत् पृच्छतु'' इति ।

तेन प्रोत्साहितः शिवः सोत्साहं गौरीं पृष्टवान् - ''भवत्या गृहस्य द्वाराणि लघूनि उत विशालानि ?'' इति ।

तस्य प्रश्नं श्रुत्वा शास्त्री हसितवान् । किन्तु गौतमः चन्द्रश्च चिन्तितवन्तौ यत् एतादृशः अपि कश्चन प्रश्नः भवेत् वा ? इति ।

गौरी सुन्दरं शिवमेव क्षणं दृष्ट्वा उक्तवती - ''वयं कृषिकजनाः, श्रमजीविनः च ।



एतादृशानां गृहस्य द्वाराणि लघूनि एव भवन्ति प्रायः । अस्माकं गृहं भवतः गृहतोऽपि लघु एव'' इति ।

एवं वदन्त्या तया उक्तम् आसीत् यत् मम गृहस्य आयः अल्पः, अतिथिसत्करः अपि अल्पः एव इति ।

गौर्याः एतत् उत्तरं श्रुत्वा शिवः पुनः अपृच्छत् - ''समीचीनम् । प्रातः जलेन पूर्णः घटः भवत्यै दीयते चेत् सः घटः सायं रिक्तः भवति उत पूर्णः एव ?'' इति ।

तदा गौरी उक्तवती - ''रिक्तता कथं शोभेत ? अतः अहं कदापि घटं न रिक्तीकरिष्यामि'' इति ।

शिवः एतावता ज्ञातवान् यत् एषा गौरी न केवलं मितव्ययकर्त्री, अपि तु सर्वेषां वस्तूनां मूल्यमपि जानाति इति ।

अनेन सन्तुष्टः सः पुनः पृष्टवान् - ''किन्तु एतत् वदतु - वृद्धम् अप्रयोजकं वृषभं किं कुर्मः इति'' इति ।

''जगति सर्वे प्राणिनः वार्धक्यं प्राप्नुवन्ति एव । किन्तु अस्माभिः एतत् सर्वदा स्मर्तव्यं यत् एते तारुण्ये अस्माकं सेवां कियत् कृतवन्तः इति । अतः पूर्ववत् एव वार्धक्ये अपि तेषां पालनं पोषणं च अस्माकं दायित्वम्'' इति उक्तवती गौरी ।

अनेन उत्तरेण शिवः ज्ञातवान् यत् मया एषा परिणीता चेत् एषा पितामहीपितामहयोः रक्षणम् अवश्यं करिष्यति इति । तथापि सः पुनः पृष्टवान् - ''एकेन एकस्य योजनम् उचितम्, उत अनेकस्य, उताहो किञ्चित् योजनं वरम्, उत योजनस्य आवश्यकता एव नास्ति ?'' इति ।

एतं प्रश्नं श्रुत्वा किञ्चित् कुपिता गौरी उक्तवती - ''एकं बृहत् भवति चेत् तेन सह अन्यस्य योजनं न आवश्यकम् । किन्तु यत्र उभयम् अपि समानं तत्र एकेन सह दश अपि योजयितुं शक्यम्'' इति ।

गङ्गाधरशास्त्री एतावत्पर्यन्तं मौनम् आश्रित्य आसक्त्या तयोः वार्तालापं शृण्वन् आसीत् । अन्तिमप्रश्नस्य उत्तरं श्रुतवतः शिवस्य मुखं किञ्चित् गम्भीरम् अभवत् ।

किन्तु गौतमचन्द्राभ्यां तु किमपि न ज्ञातम् । तौ शास्त्रिणः मुखमेव पश्यन्तौ आस्ताम् ।

तदा गङ्गाधरशास्त्री अवदत् - ''शिवस्य अन्तिमं प्रश्नं, गौर्याः अन्तिमम् उत्तरं च विहाय अन्यत् सर्वं भवद्भ्यां ज्ञातमेव स्यात् । अतः इदानीम् अहम् अन्तिमप्रश्नोत्तरं विवृणोमि । शिवेन कृतस्य प्रश्नस्य आशयः एषः यत् एकस्य वचनस्य उत्तररूपेण दश वाक्यानि सा वदेत् वा ? इति । अनेन प्रश्नेन किञ्चिदिव कुपिता गौरी उक्तवती - 'गृहे ज्येष्ठः कश्चित् एकम् अप्रियं वचनं वदति चेदपि तूष्णीम्भावः उचितः । किन्तु पतिः अप्रियं यदि कथयति तर्हि एकस्य दशवाक्यात्मकोत्तरदानम् अपि उचितमेव' इति । गौर्याः अभिप्रायः यत् पतिपत्न्योः मध्ये जायमानः कलहः सहज एव इति । किन्तु परस्परं सादरं व्यवहरन्तौ तौ जीवनं यापयेताम् । अतः एतौ वधूवरौ निश्चयेन योग्यौ, सूक्ष्ममती चापि । अतः शुभं भवतु । शीघ्रमेव विवाहः भवतु'' इति ।





# गृहसदस्यः एव चोरः

मध्याह्नस्य समयः । कमलायाः पतिः भोजनं समाप्य कार्यार्थं बहिः गतः । पाकशालायाः पार्श्वे एव स्थिते प्रकोष्ठे कमला विश्रान्तिं स्वीकुर्वती सुप्ता । तदा उत्पन्नेन शब्देन तस्याः निद्रायाः भङ्गः जातः । शब्दः कुतः आगतः इति सा आश्चर्येण परिवृत्य दृष्टवती । तत्र यत् दृष्टं तत् तस्यां महत् आश्चर्यम् अजनयत् । यतः तत्र ननान्दुः पतिः शरदः तस्याः पेटिकाम् उद्घाटयन् आसीत् ।

कमला तूष्णीं स्थित्वा पश्यन्ती एव आसीत् । सः शरदः पेटिकाम् उद्घाट्य अन्तः स्थितं शाटिकानां मध्ये गोपितं सुवर्णाभरणं स्वीकृत्य ततः प्रस्थितः । स्तब्धा कमला एतत् सर्वं पश्यन्ती एव आसीत् ।

लक्ष्मीः कमलायाः पत्युः अग्रजा । तस्य अग्रजां विना अन्यः कोऽपि बन्धुः नासीत् । लक्ष्म्याः पतिः शरदः न्यायालये उद्योगी । सः उत्तमः शान्तः च ।

अतः कमला शरदस्य विषयम् एव चिन्तयन्ती स्वगतम् अवदत् - ''भ्राता शरदः उत्तमः । तस्मिन् कोऽपि दुर्गुणः नास्ति । किन्तु तादृशेन एवं चौर्यं किमर्थं कृतम् इति मया ज्ञातव्यम् एव'' इति ।

कमला एतं विषयं कमपि न उक्तवती । यदा पतिः गृहम् आगतः तदा सा केनापि व्याजेन पत्युः पुरतः एव स्वस्य पेटिकाम् उद्घाटितवती । पेटिकां दृष्ट्वा सा उच्चैः क्रन्दनं कृतवती - ''अहो, आभरणं चोरितम् अस्ति केनापि'' इति ।

कमलायाः क्रन्दनं श्रुत्वा गृहस्य सर्वे जनाः सम्मिलिताः । सर्वेऽपि इतः ततः अन्वेषणे उद्युक्ताः । कमला अपि व्याकुलतां प्रदर्शयन्ती - ''यदा एतादृशी समस्या उत्पन्ना भवति तदा अहं तस्याः समस्यायाः निवारणे



भगवन्तम् एव आश्रयामि । इदानीमपि तथैव करोमि । यतः इदानीम् अन्यः कोऽपि उपायः न भासते'' इति वदन्ती एव देवगृहं प्रविश्य नेत्रे निमील्य प्रार्थनायां मग्ना अभवत् ।

दश दिनानि अतीतानि । एकादशे दिने प्रातः कोऽपि द्वारताडनं कृतवान् । कमलायाः पतिः माधवः द्वारम् उद्घाट्य दृष्टवान् । तस्य पुरतः कश्चन वृद्धः संन्यासी स्थितः आसीत् । संन्यासिना पृष्टम् - ''माधव ! अन्तः आगन्तुम् अनुमतिः अस्ति, उत अत्रैव सर्वम् उक्त्वा गच्छामि ?'' इति ।

माधवः विचिन्त्य कथयितुम् उद्युक्तः । तावता तत्र आगतः शरदः संन्यासिनं प्रणम्य अन्तः आनायितवान् ।

अन्तः आगच्छन् सः संन्यासी शरदं परीक्षादृष्ट्या दृष्टवान् । तदा एव तत्र आगतां कमलां दृष्ट्वा हसन्मुखः सन् - ''कथमस्ति पुत्रि ! भगवतः प्रेरणया मया अत्र आगतम् । भवत्याः मातृगृहे दत्तानि आभरणानि अकस्मात् चोरितानि किल ?'' इति अवदत् ।

कमला अङ्गीकारपूर्वकं शिरः चालितवती । तदा सः संन्यासी ताम् आश्वासयन् - ''चिन्ता मास्तु । चोरितानि आभरणानि द्वित्रिदिनाभ्यन्तरे लप्स्यन्ते । अहं प्रपरेद्यवि अत्र आगमिष्यामि । इदानीं मम किञ्चन अनिवार्यं कार्यम् अस्ति । तत् समाप्य आगमिष्यामि'' इति उक्त्वा ततः प्रस्थितः ।

द्वारसमीपं गच्छन् सः शरदं पृष्टवान् - ''मया सह आगन्तुं किं शक्यते भवता ?'' इति ।

संन्यासितः पूर्वमेव भीतः शरदः कम्पमानः तस्य वचनम् अङ्गीकृतवान् । सः संन्सासिनम् अनुसृतवान् । अर्धघण्टानन्तरं गृहं प्रत्यागतः शरदः शान्तमनस्कः आसीत् । दिनद्वयात् या व्याकुलता भीतिश्च तस्य मुखे दृश्यते स्म सा इदानीम् अपगता आसीत् । स्वस्थः इव दृश्यते स्म सः ।

तस्मिन् दिने एव सायं कमला शाटिकां स्वीकर्तुं पेटिकाम् उद्घाटितवती । तत्र चोरितानि आभरणानि दृष्टानि । तत् दृष्ट्वा सन्तोषेण चीत्कारं कुर्वती सा - ''आभरणानि लब्धानि'' इति उच्चैः उक्तवती ।

गृहसदस्याः सर्वे आगताः । ते सर्वेऽपि अनया घटनया सन्तुष्टाः । तृतीये दिने आगतस्य संन्यासिनः सत्कारः महता आदरेण कृतः ।

संन्यासी पीठे पद्मासनस्थितौ उपविश्य सर्वान् उद्दिश्य – "भवन्तः सर्वेऽपि सर्वदा एतत् स्मरन्तु यत् गृहस्य सुखं, दुःखं, सौभाग्यम् इत्यादिकं सर्वम् अपि स्नुषायाः दायित्वम्" इति वदन् अन्येषां प्रश्नस्य अवसरमपि अयच्छन् उत्थाय गृहतः प्रस्थितः एव ।

माधवः तद्दिने रात्रौ कमलाम् अवदत् – "सः संन्यासी निश्चयेन दैवांशयुक्तः" इति । संन्यासिनः स्मरणेन माधवस्य मुखे गौरव-भावना स्पष्टतया दृश्यते स्म ।

कमला हसन्ती पतिम् उक्तवती – "विवाहानन्तरं सर्वदा भवतः अग्रजा अतृप्ता एव आसीत् । तां तर्पयितुम् शरदेन चोरकर्म करणीयम् अभवत् । सः संन्यासी न अन्यः, मम मातुलः विश्वनाथः एव सः । तस्य साहाय्येन अहम् एवं योजनां कृतवती" इति ।

अग्रे कथयन्तीं तां निवार्य माधवेन उक्तम् – "भवत्या चमत्कारः एव कृतः । अहं यदा यदा भवत्याः ग्रामं गतः तदा भवत्याः मातुलं दृष्टवान् । किन्तु संन्यासिनः वेषं धृतवन्तं तम् अभिज्ञातुं समर्थः न अभवम्" इति ।

"सः पौराणिकनाटकेषु पात्रं वहति । अतः एव न ज्ञातः सः । तदस्तु, शरदं बहिः नयन् सः किं कृतवान् इति किं भवान् जानाति ? तेन शरदः उक्तः – 'आभरणचोरः भवान् इति ज्ञातवान् अहम् । किमर्थम् एवं दुष्कार्यं कृतं भवता ?' इति । तदा शरदः रुदन् तस्मै पत्न्याः पीडनं सर्वं निवेदितवान् । तस्य मनसि स्वस्य दारिद्र्यविषये लज्जा आसीत् । अतः चौर्ये प्रवृत्तः । मम मातुलः तं बोधितवान् यत् इतः परम् एवं न भवेत्, पत्नी स्व-नियन्त्रणे स्थापनीया इति । अतः एव ततः आगतः शरदः आभरणं स्वयमेव आनीय पेटिकायां रहसि स्थापितवान्" इति उक्तवती कमला ।

कमलां प्रीत्या पश्यन् माधवः उक्तवान् – "गृहस्य गौरवं रक्षितं भवत्या । जामातुः अपकीर्तिः यथा न भवेत् तथा जागरूकतया योजना अपि कृता । श्वशुरगृहस्य गौरवस्य रक्षयित्री यस्मिन् गृहे भवति तत् गृहं धन्यम् इति तु सत्यम् । एतदपेक्षया सुन्दरम् अमूल्यम् आभरणम् अन्यत् किमपि भवितुं न अर्हति" इति ।





# स्वर्गप्राप्तिः

कश्चित् जीवने समग्रं सुखम् अनुभूय, अन्ते स्वर्गः प्राप्तव्यः इति निश्चित्य वनं गत्वा तपसि मग्नः ।

अन्यः कश्चन संसारं निस्सारं मत्वा विरक्तः सन् वनम् आगतः । तत्र सः दृष्टवान् यत् कश्चित् पूर्वमेव आगत्य तपसि लीनः अस्ति इति ।

तपस्यन्तं पुरुषं दृष्ट्वा द्वितीयः अचिन्तयत् - 'अस्य सेवा कृता चेत् स्वर्गप्राप्तिः भवेत्' इति । अतः सः प्रथमं तपस्यन्तं पुरुषम् अवदत् - ''महात्मन् ! मां भवतः शिष्यत्वेन अङ्गीकरोतु'' इति ।

''मम कस्यापि आवश्यकता नास्ति । मम तपोभङ्गं न करोतु'' इति वदन् सः नेत्रे निमीलितवान् । तदा द्वितीयः - 'तपस्विनः अस्य तपसि विघ्ननिवारणमेव पुण्यं कर्म' इति विचिन्त्य तपः कर्तुम् उद्युक्तः जातः ।

पशुपक्षिप्रभृतिभिः प्रथमस्य तपसः भङ्गः यथा न भवेत् तथा जागरूकः आसीत् द्वितीयः तपः कुर्वन् एव । यः कोऽपि प्राणी आगतः चेत् तं दूरं प्रेषयति स्म सः । किन्तु प्रथमः तु द्वितीयस्य चिन्तनं किमपि अकुर्वन् तपसि लीनः आसीत् ।

कदाचित् कश्चन रजकः तत् वनम् आगत्य तयोः तपस्विनोः समीपे स्थिते तडागे वस्त्र-क्षालनम् आरब्धवान् ।

वस्त्रप्रक्षालनेन द्वयोः तपस्विनोः अपि तपसि विघ्नः उत्पन्नः । प्रथमः तपस्वी नेत्रे उन्मील्य प्रक्षालकं दृष्टवान् । तदीयं मनः चञ्चलम् अभवत् । किन्तु क्षणे एव मनसि आगतं विचारं परिवर्त्य सः पुनः तपसि लीनः अभवत् ।

किन्तु द्वितीयः तपस्वी कुपितः सन् प्रक्षालकस्य निन्दनम् आरब्धवान् - 'रे मूर्ख ! भवतः बुद्धिः नास्ति किम् ? अत्र वस्त्रप्रक्षालनं कुर्वता भवता आवयोः तपसः विघ्नः उत्पादितः । शीघ्रम् इतः दूरं गच्छतु'' इति ।

''महाभाग ! भवतः तपस्या मम

परिवारस्य भोजनं दापयितुं न समर्था । गच्छतु, मम कार्ये हस्तक्षेपं मा करोतु'' इति उपेक्षया उत्तरं दत्त्वा पुनः वस्त्रप्रक्षालने मग्नः अभवत् सः रजकः ।

एवमेव द्वितीयः तपस्वी प्रतिदिनं रजकेन सह कलहं कुर्वन् भवति स्म । किन्तु रजकः तं तडागं त्यक्त्वा न गतः एव ।

कतिचन दिनानि अतीतानि । अनन्तरं कदाचित् सः रजकः मृतः । द्वितीयः तपस्वी अपि स्वप्राणान् अत्यजत् । ततः कतिचन दिनानि गतानि । प्रथमः तपस्वी अपि स्वदेहं त्यक्त्वा स्वर्गं प्रति प्रस्थितवान् । तदा तेन नरके महत् कष्टम् अनुभवन् द्वितीयः तपस्वी दृष्टः ।

तदा द्वितीयः प्रथमं तपस्विनम् उक्तवान् - ''महाशय ! माम् अपि भवता सह स्वर्गं नयतु । मया भवतः सेवा कृता किल ?'' इति ।

ततः सः प्रथमः तपस्वी स्वर्गं गतः । तत्र सः सुखम् अनुभवन्तं रजकं दृष्टवान् । तदा सः तपस्वी स्वेन सह आगतं देवदूतं पृष्टवान् - ''मया सह तपः कृतवतः नरकवासः ! आवयोः तपसि विघ्नं कृतवतः अस्य रजकस्य स्वर्गप्राप्तिः !! एतत् सर्वं कथं सङ्गच्छते ?'' इति ।

तदा देवदूतः अवदत् - ''एषः रजकः भवतोः तपः शीघ्रं फलदायकं भवितुं साहाय्यं कृतवान् । अनेन वस्त्रक्षालनसमये यः ध्वनिः कृतः, तेन भवान् अधिकतया एकाग्रतां प्राप्तवान् । एषः रजकः किमपि पापं न आचरितवान् । प्रत्युत स्वकुटुम्बं योग्यरीत्या परिश्रमेण पालयन् स्वस्य कर्तव्यपालनं कृतवान् । अतः सः स्वर्गप्राप्तेः अधिकारी एव । किन्तु भवतः सहचरः अन्यः तपस्वी किमपि तपः अकुर्वन् मनसः चञ्चलत्वं प्राप्तवान् । अपि च सः पशुप्राणिनः ताडयन् रजकेन सह कलहं कुर्वन् भवतः तपसः अपि विघ्नं कर्तुं सिद्धः अभवत् । अतः एव सः स्वर्गप्राप्तेः अधिकारी न जातः । तस्य मनसः नियन्त्रणं न आसीत् । एकाग्रता नैव प्राप्ता तेन । इच्छायाः दूरीकरणं तेन न कृतम् । ईश्वरस्य ध्यानं कर्तुं तदीयं मनः सिद्धं न आसीत् । अत एव तेन नरकवासः प्राप्तः'' इति ।



चन्दमामायाः प्रस्तुतिः

# अजेयः गरुडः

११

*चित्रं* - पाणिः

सेनापतिः नरेन्द्रदेवः तान्त्रिकबन्धोः सूचनायाः अनुगुणं गुहामन्दिरे एव वसति । चान्दनीनदीतीरे वसतः रवीन्द्रदेवस्य शिबिरं गत्वा आप्तपुरुषः वदति यत् सुरक्षार्थं पित्रा सह गुहामन्दिरे वासः वरम्, आदित्यस्य अन्वेषणं परित्यक्तव्यम् इति । चन्द्रपुरीं प्रतिगताः आदित्यः तदनुयायिनश्च प्रासादस्य रक्षणकार्यं वशीकुर्वन्ति ।

आदित्यः अनुयायिभिः सह दुर्गं प्रविशति ।

रवीन्द्रदेवेन कारागारे ये स्थापिताः तान् बन्धविमुक्तान् कृत्वा तत्तत्कर्तव्ये नियोजयतु । एतत् भवतः आद्य कर्तव्यम् ।

आदित्यः स्वप्रकोष्ठं प्रविश्य गरुडप्रतिमायाः पुरतः उपविश्य ध्याने निमग्नः भवति । तदा...

अन्तर्दर्शनि सः तान्त्रिकस्य गुहामन्दिरं पश्यति । नरेन्द्रदेव-रवीन्द्रदेवयोः उपस्थितौ प्रचलत् अनुष्ठानम् अपि पश्यति सः ।


प्रासादात् बहिः ढक्कातूर्यादीनां ध्वनिः श्रूयते । एतस्मात् आदित्यस्य ध्यानं स्थगितं भवति । महाराजः आगतः इति सः अवगच्छति ।
आदित्यः प्रवेशद्वारस्य दिशि वेगेन गच्छति ।
रथः मम पृष्ठतः अस्ति महानुभाव !
अरुणे ! भवती आदौ अन्तः गच्छतु ।


आनन्दितः जनसमूहः राज्ञः कथनं श्रोतुं समुत्सुकः अस्ति
अहं नरेन्द्रदेवं रवीन्द्रदेवं च राजद्रोहित्वेन घोषयन् अस्मि । तौ चन्द्रपुरीतः पलायितवन्तौ स्तः । सजीवौ मृतौ वा तौ अत्र आनेतव्यौ ।
तान्त्रिकगुहायाम् आप्तपुरुषः आश्वासनं ददाति ।
भयं प्राप्तव्यं नास्ति । भवान् अत्र पूर्णसुरक्षितः अस्ति युवराज ! अत्र चतसृषु दिक्षु रक्षकाः सन्ति ।


... महानुभाव ! राजर्षिः पाशङ्करस्य आत्मनः आवाहनाय विशेषानुष्ठानं कुर्वन् अस्ति ।
.... ते रक्षकाः आदित्यं वशीकरिष्यन्ति अचिरात् एव ।
तान्त्रिकस्य पुरतः स्थितात् अग्निकुण्डात् उत्थिता विशिष्टाकृतिः यं भयजनकं शब्दम् अकरोत् तस्मात् आप्तपुरुषस्य सम्भाषणे विघ्नः उत्पन्नः ।

पाशङ्करवर्य ! स्वामिनः विषये अस्माकं कर्तव्यम् अस्ति यत् यः अस्माकं शत्रोः आशीर्वादं प्राप्तवान् अस्ति तस्य समूलं निष्कासनम् इति ।

सः चन्द्रपुर्यां वसति । अग्रिम-पूर्णिमातः पूर्वं सः मत्समीपम् आनेतव्यः तदा एव मम यज्ञः समाप्तः भवितुम् अर्हति ।

सम्मोहितः करणीयः सः । अन्यथा सः भवन्तं नाशयेत् । भवतः पक्षौ च कर्तयेत् ।

गुरुदेव ! अहं करिष्यामि । किन्तु ततः पूर्वं मया तदधिकारयुक्तं स्थानं प्रति गन्तव्यं भविष्यति ।

अहं तं युवकम् एव मारयिष्यामि ।

गर्वितः रवीन्द्रदेवः आत्मनः निग्रहणे असमर्थः भवति ।

सामान्यस्य जनस्य ग्रहणाय किमर्थं स्वशक्तिः व्ययीकरणीया भवता ? मह्यम् अनुज्ञां ददातु । अहम् आदित्यं क्षणाभ्यन्तरे वशीकरिष्यामि ।

रवीन्द्रदेवस्य व्यवहारः वक्रतायुक्तः इति चिन्तयति तान्त्रिकः ।

स्वामिनिष्ठासैनिकान् एकत्रीकरोतु । यदा पाशङ्करः आदित्यं मायया वशीकरिष्यति तदा राजसेनायाः वशीकरणाय सन्नद्धेन भवितव्यं भवता ।


तान्त्रिकः स्वस्य गुहायाः प्रवेशात् पूर्वम् आप्तपुरुषं वदति ।
युवराजः वक्तव्यः यत् स्वशक्तिम् अतिक्रम्य न व्यवहरणीयम् इति । अन्यथा सः विपद्ग्रस्तः भवेत् ।
चन्द्रपुर्याम् .....
आदित्य ! अग्रिमं पदं कीदृशं भवेत् अस्माकम् ?


आदित्यः अनुयायिनः सर्वं वदति
अस्माभिः उभौ अपि राजद्रोहिणौ ग्रहीतव्यौ । तौ प्रतिवेशिनि सर्पदिशि स्थितायां गुहायां निलीय बसतः इति श्रूयते । बनजातिनायकः तस्य सुरक्षाव्यवस्थां पश्यति ।
राजा आश्चर्यचकितः भवति ।
सर्पदिशः ! अहो, तत्रत्यः तान्त्रिकः वनजातीयान् वशीकृतवान् अस्ति ।


एतत् अपायकरं किञ्चन अभियानम् ।
तथापि दुष्टशक्तीनां वर्धनाय अवकाशः न देयः । यतः प्रवृद्धा दुष्टशक्तिः इतोऽपि अपायकारी । भवदाशीर्वादेन वयम्..
तं तान्त्रिकं निग्रहीष्यामः । नरेन्द्रदेवः रवीन्द्रदेवश्च कारागारे स्थाप्येते । अस्माकं विश्वासार्हजनाः प्रमुखस्थानेषु स्थित्वा रक्षणं कुर्वन्तः सन्ति ।
अनुवर्तते

# निर्मीयतां मेषः

**शाकैः मेषादिनिर्माणकला वस्तुतः आनन्ददायिनी ।**
**मेषादीन् निर्मान्तु भवन्तोऽपि !**

**आवश्यकवस्तूनि** - *स्थालिकापरिमिता उद्यानीयमृत्तिका, सर्षपसस्यानि, श्वेतमूलकानि, क्यालिफ्लवर्शाकः, लवङ्गाः, दृढशलाकाः, छुरिका, निर्यासः च ।*




मेषनिर्माणात् केभ्यश्चित् दिनेभ्यः पूर्वं मृत्तिकायां सर्षपाः वपनीयाः, प्रतिदिनं ते जलेन सेचनीयाः च । अङ्कुरिताः एते चतुर्षु दिनेषु मेष-शाद्वलाय यावत् आवश्यकं तावत् औन्नत्यं प्राप्नुयुः । महाकारकः क्यालिफ्लवर्शाकः वृक्षायितः भवतु । तं शाद्वले योजयन्तु ।

**मेषस्य निर्माणम्** - मूलकस्य तीक्ष्णाग्रं किञ्चित् कर्तयन्तु । एतत् मेषस्य शिरः भवतु । अग्रभागे विदारणं कृत्वा मुखं कल्पयन्तु । नेत्रकल्पनाय लवङ्गस्य उपयोगः भवतु ।

मूलकस्य अग्ररहितः दृढतरः भागः मेषस्य शरीरं भवतु । दृढशलाकाभिः तस्य कण्ठं पादान् च कल्पयन्तु । वलयाकारेण कर्तिताः मूलकखण्डाः बहवः तस्य शरीरे योजनीयाः । एते ऊर्णत्वं प्राप्नुवन्तु । विभिन्नाकारान् द्विग्रान् मूलकखण्डान् कर्णत्वेन योजयन्तु । एवं सिद्धं मेषं शाद्वले प्रतिष्ठापयन्तु ।

# भेदाः अभिज्ञायन्ताम्

उभे अपि चित्रे यद्यपि समानाकारके इव भासेते, तथापि तयोः सूक्ष्मभेदाः तु सन्ति बहवः । तान् अभिजानन्तु ।







# उपकारं कुर्वन्तु शशस्य

अहो, रोहित-नामकः शशः अस्वस्थः जातः अस्ति । तस्य गुलिकाः समग्रे प्रकोष्ठे इतस्ततः विकीर्णाः सन्ति । तेषां सङ्ग्रहाय साहाय्यं कुर्वन्ति खलु भवन्तः ? गोलाकारिकाः दीर्घाकारिकाः च गुलिकाः कति सन्ति इति गणयन्तु अपि ।

(उत्तराणि ६६ तमे पृष्ठे)




# चित्रशीर्षिकास्पर्धा







**उपरितनं चित्रद्वयं दृष्ट्वा परस्परसम्बन्धिवाक्यद्वयेन चित्रशीर्षिकां किं भवन्तः प्रेषयितुं शक्नुयुः ?**

समपत्रे लिखिता चित्रशीर्षिका अधस्तनसङ्केताय प्रेषणीया –
चन्दमामा (संस्कृतम्) 'अक्षरम्' ८ उपमार्गः, गिरिनगरम्, बेङ्गलूरु – ५६००८५

युक्ता शीर्षिका एतन्मासस्य २५ तः पूर्वं प्रेषणीया । सर्वश्रेष्ठायै शीर्षिकायै रू. १००/- पुरस्काररूपेण दास्यन्ते ।
पुरस्कृता शीर्षिका मासद्वयानन्तरं प्रकाशयिष्यते ।

## अभिनन्दनानि

'सप्टम्बर्'मासीयस्पर्धाशीर्षिकाप्रेषकः –

**श्री कामेश्वरराव् के.**
*एल्.ऐ.जि.-२, २४, ए.पि.एच्.बि. कालोनि,*
*पालकोल् – ५३४ २६० (आ.प्र.)*

### पुरस्कृतशीर्षिका





**पुष्पं स्पृष्ट्वा पश्यति साश्चर्यम्**
**कार्यं कृत्वापि हसति सानन्दम्**

उत्तरम्
मनोविनोदस्य
(पृ - ६४)

### अन्विष्यन्तां भेदांशाः

१. शिरस्त्रस्य अन्ते स्थितं मृदुरोमगोलकम् ।
२. शिरस्त्रस्य रेखाविन्यासः ।
३. शृङ्गे स्थिताः पङ्क्तिकाः ।
४. अजस्य चतुर्थः पादः ।
५. अजस्य कण्ठरोम ।
६. धूलिमेघः ।
७. बालकस्य कोषः ।
८. पादत्राणस्य विन्यासः ।

उपकारं कुर्वन्तु
शशस्य
३८ गुलिकाः ।

Printed and Published by B. Viswanatha Reddi at B.N.K. Press Pvt. Ltd., Chennai - 600 026 on behalf of Chandamama India Limited, No. 82, Defence Officers Colony, Ekkatuthangal, Chennai - 600 097. Editor : Viswam

